विद्योदयो निराकुर्याद्विद्यातिमिरं सदा ॥

# अथ केशवीया जातकपद्धतिः प्रौढमनोरमासहिता ॥

सहस्रांशुरिवाशेषमुद्राकिरणराजिभिः ॥

प्रौ॰म॰ श्रीकेशवोग्रहकौतुकादिगणितस्कन्धंप्रथमतोविधिवद्व्यवस्थाप्याधुनासंक्षिप्ताक्षरवृत्तैर्निबद्धांबहूर्थांसुलघुप्र
२ क्रियांजातकपद्धतिंचिकीर्षुर्जन्मजन्मान्तरार्जितदुरितोत्पन्नप्रत्यूहव्यूहनिरासेनग्रन्थंसमाप्त्यर्थंसमाप्तेरपि
ग्रन्थेतत्प्रचयगमनार्थंशिष्टाचारपरिपालनेनशिष्यशिक्षार्थंचनमस्कारलक्षणंमङ्गलमाचरन्ग्रन्थारम्भंशार्दू
लविक्रीडितपूर्वार्द्धेनप्रतिजानीते॥ ॥ नत्वाविघ्नपशारदाच्युतशिवब्रह्मार्कमुख्यग्रहान्कुर्वेजात
कपद्धतिंस्फुटतरांहोराविदांप्रीतये॥ ॥ अहंकेशवोजातकपद्धतिंकुर्वेइतिक्रियाकारकयोजना। अत्र
क्रियाबलादहमित्यध्याहारः। जातस्यबालकस्यप्राग्जन्मार्जितसदसन्मिश्रकर्मजनितशुभाशुभमिश्रफलनि
रूपकंशास्त्रंजातकंतस्यपद्धतिःक्षुण्णोमार्गः। सरणिःपद्धतिःपद्येत्यमरोक्तेः। एवंतांजातकपद्धतिंकुर्वेकरोमि।
किंकृत्वाविघ्नपशारदाच्युतशिवब्रह्मार्कमुख्यग्रहान्नत्वा। विघ्नंपातीतिविघ्नपोगणेशः। यथामृगप्राणहरेसिंहे
मृगपतिप्रयोगोयथाचशकनृपप्राणहरेविक्रमादित्येशकनृपप्रयोगस्तथाविघ्नहरेगणेशेविघ्नपप्रयोगइति
ध्येयम्। शारदासरस्वती, अच्युतोविष्णुः, शिवोमहादेवः, ब्रह्माप्रसिद्धः, अर्कमुख्याःश्रीसूर्यादयोनवग्रहाः, तान्न राम॰
मस्कृत्येत्यर्थः। नन्वन्यजातकपद्धतिषुसतीषुकिमर्थमयंग्रन्थःकृतइतिग्रन्थस्यास्यवैयर्थ्यप्रसङ्गापत्तिरित्याश २

श्रीगणेशाय नमः ॥ प्रौढमनोरमाटीकासहिता केशवीयपद्धतिः प्रारभ्यते ॥ आदित्यमज्ञानघनान्ध-
कारच्छिदं मुदं संततमादधानम्। जगत्प्रसूतिस्थितिनाशहेतुं श्रीभास्करं भास्वररूपमीडे ॥ विघ्ननिघ्नमहं वन्दे वि-
घ्नपं विबुधार्चितम्। यस्य स्मरणतः साध्यं सिद्धिं प्राप्नोति सत्वरम् ॥ श्रीकेशवार्यवचनानि जयन्ति तानि निर्दूषणा-
नि बहलार्थसुपूरितानि। धन्यानि शिष्यजनबुद्धिविवृद्धिदानि स्वल्पाक्षराणि बुधतोषविधायकानि ॥ अपि स्फुर-
त्पण्डितमण्डनेन प्रचण्डपाण्डित्यमखण्डि येन। ज्ञानाधिराजस्य गुरुं नृसिंहं प्रचण्डचण्डांशुमतिं तमीडे ॥ श्री-
मच्छिवाख्यं गणितज्ञचक्रचूडामणिं सज्जनवृन्दवन्द्यम्। विदुर्विदे यं धिषणेन तुल्यं तं नौमि नित्यं धिषणाप्तिहे-
तोः ॥ श्रीकेशवार्यैर्गगनाब्धि ४० वृत्तबद्धोदिता जातकपद्धतिर्या। तैरेव तस्या विवृतिः कृताऽस्ति परं न तत्राऽस्ति सु-
युक्तिरुक्ता ॥ संप्रार्थितः शिष्यगणेन युक्तिः कार्यातिवर्येति दिवाकरोहम्। सवासनां तद्विवृतिं करोमि यतो जनो मे स-
कलोऽपि रज्यः ॥ यद्यप्यशक्या विवृतिर्विधातुं मया जडेनामलकेशवोक्तेः। तथाऽपि कुर्वे शिवपादपद्मप्रसादतः
प्रौढमनोरमाख्याम् ॥ अथ श्रीकौशिकमुनिवरवंशोद्भवोपरपारावारतीरनिकटवर्तिनन्दिग्रामनिवासकृद्दम-
तेश्वरसुन्दरचरणकमलयुगलभजनावाप्तसमस्तविद्यः सकलागमाचार्यवर्यः श्रीकमलाकरदैवज्ञनन्दनः

श्री·म· हिता। स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्नामिधानस्त्वसौ होरान्योऽङ्ग· विनिर्णयश्च कथितस्कन्धस्तृतीयोऽपरः
३ तस्मात्केवलहोराविदि न ज्योतिःशास्त्राभिज्ञताव्यवहार इति सिद्धम्। अन्यथा गणितस्कन्धैकदेशकरणाभिज्ञेऽपि ग
णितस्कन्धसिद्धान्तज्ञताप्रसङ्गः स्यात्। होराविदामित्यनेन तु केवलजातकवि
दां त्रिस्कन्धज्योतिःशास्त्रविदां च प्रीतिजनकत्वमुक्तं भवति। त्रिस्कन्धज्योतिःशास्त्रविदां होराज्ञत्वात्। आचार्येणा
प्युक्तं ये ज्योतिर्विदस्त एतद्धोराशास्त्रविदो भवन्त्येवेति। तस्माद्धोराविदामिति पाठः साधीयान्॥ अथोत्तरार्धेन ग्र
न्थान्तरसाध्यामितिकर्तव्यतामस्तु लग्नसाधनं चाह॥ ॥ **यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेद्योऽथ खेटाः**
**स्फुटा यत्नस्ते हि घटन्त उद्गमदहास्तर्क्षं सषड्भः स च॥१॥** अत्रास्यां पद्धतौ यन्त्रैः कृत्वा जन्मसमयः स्पष्ट
तरोऽतिसूक्ष्मो वेद्यो ज्ञातव्यः। यन्त्राणि तु श्रीभास्करेणोक्तानि। गोलो नाडीवलयं यष्टिः शङ्कु· घटी चक्रम्। चापं तुर्यं
फलकं धीरेकं पारमार्थिकं यन्त्रम्॥ एभ्यः समयज्ञानं तैरेवोक्तं विस्तरभयान्नात्र प्रतिपाद्यते। अत्रास्मिन् जन्मका
ले खेटाः साध्याः। खे आकाशे अटन्ति गच्छन्तीति ते खेटा ग्रहा इत्यर्थः। ननु मध्यमन्दस्पष्टभेदभिन्नत्वाद्ग्रहाः कीदृशाः सा राम:
ध्या इत्यत आह। स्फुटा इति। फलादेशे स्फुटानामेव मुख्यत्वात् स्फुटा इत्युक्तं युक्तम्। तदुक्तं सिद्धान्तशिरोमणौ। या ३

कुर्वा इह। स्फुटतरामिति। अतिशयेन स्फुटेति स्फुटतरा तामतिलघुप्रक्रियामित्यर्थः। तथा चानेन विशेषणेन पूर्वैः
नीलकण्ठश्रीधरश्रीपतिपूर्वैर्विरचितपूर्वपद्धतिभ्यो वैशिष्ट्यं द्योतितम्। तत्र तु सर्वभावदृग्बलादि गणितं जातं ब
नायासेन साधितमस्तीति भावः। अतो नवीनग्रन्थप्रणयनमाचार्यस्य युक्तमेव। केचित्तु स्फुटतरां प्रकटार्थामिति
व्याचक्षते तदयुक्तम्। नहि प्राचीनश्रीपत्यादिग्रन्थेभ्योऽत्र पद्यार्थः प्रकटः समुपलभ्यते। अतोऽस्मदुक्तव्याख्यान
मेव ज्यायो विशिष्टगुणाधायकत्वात्। अथ क्रियामात्रप्रवृत्तेः प्रयोजनपूर्वकत्वात् प्रयोजनमनुद्दिश्य न मन्दोऽ
पि प्रवर्तते, इति न्यायादत्र च तदनभिधाने प्रवृत्त्यनुपपत्तिरित्याशङ्क्य पद्धतिकृत्यां प्रवृत्तौ प्रयोजनमाह। होरावि
दां प्रीतय इति। होरां जातकं विदन्ति जानन्ति ते होराविदस्तेषां प्रीतये बृहच्छास्त्रगम्भीरार्थेन शिष्यान् बोधयितुं प
रिश्रान्तानां जातकशास्त्राभिज्ञानां सुगमोपायदर्शनेन उत्पन्नप्रीतये इत्यर्थः। ज्योतिर्विदां प्रीतय इति पाठे त्रिस्क
न्धज्योतिःशास्त्रविदां प्रीतिजनकत्वमस्य ग्रन्थस्य प्रतीयते। नंतु केवलजातकाभिज्ञानाम्। तेषां ज्योतिःशास्त्रैक
देशवेत्तृत्वेन संपूर्णज्योतिःशास्त्रवेत्तृत्वाभावात्। विशिष्टस्य स्कन्धत्रयस्यैव ज्योतिःशास्त्रपदाभिधेयत्वाच्च। उक्तं
चैतद्वराहेण ज्योतिःशास्त्रमनन्तभेदविषयं स्कन्धत्रयाधिष्ठितं तत्कार्त्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते सं

सों.म. तच्चनयगणेशंदैवज्ञैर्ग्रहलाघवेस्पष्टंविरचितम्।तद्यथा।सौरोऽर्कोपिविधूच्चमङ्कःकलिकोनाब्जोगुरुस्त्वा
४ र्यजोऽसृग्राहूच्चकजंतुकेन्द्रकमथार्येसेषुभागःशनिः।शौर्क्कंकेन्द्रमजार्यमध्यगमितीमेयान्तिदृक्तुल्य
तांसिद्धैस्तैरिहपर्वधर्मनयसंत्कार्यादिकंत्वादिशेत्॥अस्मिन्कालेऽनयैवघटनयासाधिताग्रहादृक्सम
त्वंयान्त्यतद्यमेवघटनासमीचीनेतिवेद्यम्।तत्तत्कालिकोऽर्कोऽयनभागयुक्त,इत्यादिनाकरणोक्त
वर्त्मनास्वोदयैःकृत्वाइहजन्मसमयेउद्गमःसाध्यः।उद्गमोराशीनामुद्गमोलग्नमितियावत्।राशीनामुदयो
लग्नमित्यमरोक्तेः।सउद्गमःसषड्गःसन्नस्तर्क्षंभवति।षड्भिःसहवर्ततेसतथाषड्राशियुक्तइत्यर्थः।अस्तेअस्त
क्षितिजेऋक्षंराशिः।राशिक्षेत्रगृहर्क्षभानिभवनंचैकार्थसंप्रत्ययादित्यभिधानात्।यत्रभास्वानस्तंयातितदस्त
क्षितिजमित्युच्यते।एतदेवास्तर्क्षंज्योतिर्विदोजायाभावइतिवर्णयन्ति।यतोऽस्माज्जायायाःशुभाशुभविचारः
क्रियते।अतोजायाभावइतियुक्तंनाम।एवंयत्रभावेलग्नादिकेयस्यविचारस्तत्संज्ञातस्यभावस्यस्यात्।यथा
लग्नस्यतनुसंज्ञेत्यादिध्येयम्।चकारःसमुच्चयार्थेव्याख्येयः।लग्नानयनवासनानुपातद्वयेनसुगमा।अथ राम:
लग्नशब्देनकिमेतच्चिन्त्यते।लगतितल्लग्नम्।प्राक्कुजेक्रान्तिमण्डलस्ययोगृहाद्यवयवोलग्नस्तद्गृहाद्यं ४

त्राविवाहोत्सवजातकांशैः खेटैः स्फुटैरेव फलस्फुटत्वम्। इति। ननु ब्रह्मसौरार्यादिपक्षाणां सत्वात् कस्मिन् पक्षे ग्र
हाः साध्या इत्यत आह। यत्पक्षे हि घटन्त इति। यत्पक्षे यस्मिन् पक्षे हीति निश्चयेन घटन्ते प्रत्यक्षमाकाशे दृश्यन्ते त
स्मिन् पक्षे ग्रहाः साध्या इत्यर्थः। उक्तं च दामोदरपद्धतौ। यान्ति संसाधिताः खेटा येन दृग्गणितैक्यताम्। तेन पक्षेण ते
कार्याः स्फुटास्तत्समयोद्भवाः॥ इति। ननु ग्रहानयनमत्रार्षशास्त्रादेव कर्तुमुज्यते न तु मानुषात्तस्यायथार्थत्वादिति
चेत् सत्यम्। ग्रहानयनं मुनिकृतशास्त्रादेव कर्तुमुचितं परं तत्रापि कालवशेनान्तरं पतति। यत उक्तं सूर्यसिद्धा
न्ते। शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः। युगानां परिवर्तेन कालभेदोऽत्र केवलः॥ इति। वासिष्ठेऽपि। इत्थं माण्ड
व्यसंक्षेपादुक्तं शास्त्रमयोत्तमम्। विस्रस्तौ रविचन्द्राद्यैर्भविष्यति युगे युगे॥ विस्रंसनं विस्रस्तिः शिथिलत्वमिति
यावत्। तदन्तरं बीजसंज्ञं ब्रह्मगुप्तादिभिर्मानुषैः स्वसत्ताकाले लक्षयित्वा मुनिशास्त्रग्रहेषु निक्षिप्य तादृशा निक्षेप
युक्ताः स्वग्रन्था रचितास्तद्युक्तमेव। तदन्तरमतीन्द्रियज्ञैर्मुनिभिश्चलत्वात् ग्रन्थबाहुल्यभयाच्च नोक्तमपि देयमि
त्युक्तमेव। तथा च ब्रह्मसिद्धान्ते। संसाध्य स्पष्टतरं बीजं नलिकादियन्त्रेभ्यः। तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशौ।
इति। आचार्येणापि वर्तमानघटनां विलोक्य ग्रहकौतुके ग्रहानयनमरचि। तदपि षष्टिमिते गतेऽब्दे शिथिलं दृष्ट्वा

त्कालिकीकरणमयुक्तमिति। अत्रोच्यते। घटिकादिकं मासीमानादित्युक्तेर्नाक्षत्राद्दृष्टघटिकागृहीतौदयिका
र्कोल्लग्नं साध्यमिति मूलयुक्तिः। परं नाक्षत्रनाडीनामज्ञानात् प्रभासाधनोपयोगाच्च सावना एव घटिकाः पूर्वैर्लग्ना
नयने स्वीकृताः। अथ तासां नाक्षत्रत्वं विधेयम्। तत्रानुपातः। यदि घटीषष्ट्या सूर्यगतिकला लभ्यन्ते तदेष्टघटी
भिः किमिति इष्टसंबन्धिन्यो गतिकलाः स्युः। तासां प्राणीकरणार्थं द्वितीयोऽनुपातः। यदि राशिकलाभिः १८००
सूर्याधिष्ठितराश्युदयासवो लभ्यन्ते तदिष्टघटीसंबन्धिगतिकलाभिः किमिति लब्धा इष्टघटीसंबन्धिगतिक
लोत्पन्नासवः। सावनसंख्यातो नाक्षत्रसंख्याया अधिकत्वात् सावनघटीषु योज्यास्तां नाक्षत्र्य इष्टघटिका भ
वन्ति। एवं प्राप्ते परमलाघविकैराचार्यैरिष्टघटीसंबन्धिन्यो गतिकला एव खावौदयिके क्षिप्ताः। तथा कृते
तात्कालिकार्क एव संजातः। यत इष्टघटीसंबन्धिन्यो गतिकलानामिष्टघटीसं
बन्धिसूर्यचालनम्। तद्यावदौदयिकार्के क्षिप्यते तावत्तात्कालिकार्क एव भवतीति सुप्रसिद्धम्। एतत्तात्कालिका
र्कभोग्यं सावननाक्षत्रनाड्यन्तरतुल्यमेवोदयार्कभोग्यान्न्यूनमायाति। उदयार्कभोग्यं नाक्षत्रनाडीभ्यस्तात्कालि
कार्कभोग्यं सावनघटीभ्यः शोध्यं शेषं सममेव। अतस्तात्कालिकार्ककरणेन सावनघटीनां नाक्षत्रत्वं भवतीति युक्त

लग्नमित्यभिधीयते। यः परक्षितिजे लग्नस्तदस्तलग्नम्। यऊर्ध्वयाम्योत्तरवृत्ते लग्नस्तद्दशमलग्नम्। योऽध
म्योत्तरवृत्ते लग्नस्तच्चतुर्थलग्नमिति भावचतुष्टयम्। उक्तं च भास्करीयगोले। यत्र लग्नमपमण्डलं कुजे तद्गृह्य
हलग्नमुच्यते। प्राचि पश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिति दक्षिणोत्तरे॥ इति। नन्विदं लग्नसाधनमयुक्तम्। त
था हि। तत्र लग्नार्थं यादृष्टघटिका गृह्यन्ते ता नाक्षत्राः सावना वा। नाद्यः। तासां दुःसाध्यत्वात् प्रभासाधनार्थमनुपयु
क्तत्वाच्च। नापि द्वितीयः। विभिन्नजातिभ्यस्ताभ्यो नाक्षत्राणामुदयानामपनयनस्यायुक्तत्वात्। भोदयाद्भोदयप
र्यन्तं नाक्षत्रं दिनम्। तत्र द्वादशराशयः समुद्गमं यान्त्यत उदया नाक्षत्रा इति स्पष्टमेव। न च तात्कालिकार्ककरणे
न सावनघटीनां नाक्षत्रीकरणं संपाद्य नाक्षत्रा उदयाः शोध्या इति वाच्यम्। प्रथमतस्तात्कालिकार्ककरणस्यैवा
युक्तत्वात्। तथा हि। कुजे क्रान्तिमण्डलस्य यः प्रदेशो लग्नस्तत्किल लग्नम्। सूर्योदये सूर्यतुल्यं लग्नम्। सूर्य
स्य क्रान्तिमण्डलावस्थितत्वात्। राशेर्भोग्यांशा उदयानन्तरमेवोदयन्ति। अत उदयकालीनार्कस्यैव भोग्यं ग्र
हीतुं युज्यते। न तात्कालिकार्कस्य। किंच नाक्षत्रनाडीमयेऽहोरात्रसमे काले ६०।१० यावत्तात्कालिकार्को लग्नं क्रियते
न तावदर्कसमं भवति। यावदौदयिकार्कः क्रियते तावदर्कसमं भवतीत्यन्वयव्यतिरेकाभ्यां प्रतीतेर्युक्तितश्च ना

गो॰म॰ ६ ण्डलाहोरात्रसंपातात्त्र्यस्राणि क्षेत्राण्युत्पद्यन्ते। तद्यथा। मेषान्तापक्रमज्या निरक्षक्षितिजे भुजः, तद्द्युज्या
१७१९ परममण्डले कर्णः, तद्वर्गान्तरपदं मेषान्ताहोरात्रवृत्ते कोटिः। एवं वृषान्तापक्रमज्या भुजः, वृषान्तज्याक-
र्णः, तद्वर्गविश्लेषपदं वृषभान्ताहोरात्रवृत्ते कोटिः। एवं द्वन्द्वान्ते त्रिज्या कर्णः, परमापक्रमज्या १३९७ भुजः,
परद्युज्या कोटिः। तदेवं प्रसाधितानां कोटीनां ज्यारूपत्वेन ज्याखण्डानां द्युज्यावृत्तीयत्वाभावेन त्रिज्यावृत्ते परि-
णाम्य चापीकृतानि। तत्र यत्प्रथममेकराशिज्यासंभूतं स मेषोदयकालः। द्वितीयं राशिद्वयस्य। तृतीयं राशित्रय-
स्य। राशीनामाद्यन्तकालज्ञानार्थं प्रथमं द्वितीयात् द्वितीयं तृतीयाद् विशोध्य मेषादित्रयाणामुदयास्त एवाव-
शिष्यन्त इत्युपपन्नम्। त एव विलोमाः कर्क्यादित्रयाणां भवन्ति। यतः कन्यान्ताद्विलोमं कीटाद्यवधि दोर्ज्यापक्र-
मज्याद्युज्यादेर्मेषादिसाम्येनैवोपजायमानत्वात् फलस्योत्क्रमतस्तुल्यताया एवावसीयमानत्वाच्चोत्क्रमस्था-

| | |
|---|---|
| मी १६७० मे | ध १९३५ क |
| कुं १७९५ वृ | वृ १७९५ सिं |
| म १९३५ मि | तु १६७० क |

इत्युपपन्नम्। एवं तुलादिष्वपि विलोमाद्बोद्धव्यम्। तथोपजातानामेषां न्यासः॥ एते षड्-
क्ताजाता ब्रह्मतुल्यादावुक्ता नागतुरङ्ग·दस्राद्रूत्याद्यो लङ्कोदयाः पलात्मकाः। अथातो नि- रम॰
जपत्तनजननभवनसमुद्गमनमानसाधनवासना प्रोच्यते। अवनौ गगनं समन्तात्स्थल- ६

म। तथा चोक्तं सिद्धान्ते। लग्नार्थमिष्टघटिका यदि सावनास्तास्तात्कालिकार्ककरणेन भवेयुरार्य्यैः। इति। अत्र म
न्दावबोधार्थं प्रकारान्तरेण वासना निगदिता सिद्धान्तशिरोमणिवासनावार्तिकेऽस्मत्पितृचरणैः श्रीनृसिंहाचा
र्यैः। औदयिकार्कभोग्यकाले शोध्ये नाक्षत्रनाडीमयेष्टकालाच्छोधकादपनीते यावदवशिष्यते तावदेवेष्टेन के
वलशोध्ये दृष्टेन केवलं शोधकादपनीतेऽवशिष्यत इति प्रसिद्धम्। तत्र सावननाक्षत्रनाड्यन्तरतुल्यमिष्टं क
ल्पितम्। तन्नाक्षत्रघटीभ्यो यावदपनीयते तावत्सावनादृष्टघटिका भवन्ति। यावदौदयिकार्कभोग्यकालादपनी
यते तावत्तात्कालिकार्कभोग्यकालो भवति। अतस्तात्कालिकार्कात् सावनघटीभिर्लग्नं साध्यमित्युपपन्नम्। अ
थवौदयिकार्कान्नाक्षत्रेष्टकालात् साध्यम्। प्रकारद्वयमपि सयुक्तिकमेव। अतः सर्वमवदातम्। एतदुदयलग्नं
स्वोदयैः साध्यम्। स्वोदयास्तु लङ्कोदयाऽधीना इति प्रथमतो लङ्कोदयवासनोच्यते। अपमवृत्ते क्षेत्रविभागेन सर्वे रा
शयस्तुल्यप्रमाणा एव सन्ति। नाडीवृत्ते तु कालांशविभागेन सर्वे राशय उद्गच्छन्ति। निरक्षे तु तन्नाडीवृत्तं समं पूर्वा
परं सममण्डलवद्भ्रमति। क्रान्तिवृत्तं तु दक्षिणोत्तरतस्तिरश्चीनत्वेनोदेति। क्रान्तिवृत्तस्थो मेषो यावत्तिरश्चीन उदेति
तावन्नाडीवृत्तेऽष्टाविंशतिभागाः किंचिन्न्यूना एवोद्गच्छन्ति। तिर्यगेवमुद्गच्छतोऽपममण्डलस्य तिरश्चीनत्वेनोन्म

प्रमाणंभवतीतिजातम्। एवंमेषादेर्मिथुनान्तस्त्रिराशिनिरक्षोदयप्रमाणयोगेनोद्वृत्तेलगति। स्वक्षितिजेतुत्रिरा
शिचरखण्डयोगतुल्यकालेनपूर्वमेवलगतीत्यतस्त्रिराशिचरखण्डोनंनिरक्षजतृतीयराशिमानंस्वस्यादित्युपप
न्नम्। अतोनिरक्षोदयाःक्रमस्थानिजैःक्रमस्थैश्चरार्द्धैरूनाःस्वदेशेमेषादित्रयाणामुदयाभवन्तीतिसिद्धम्। एवंमे
षादेःकर्कान्तोनिरक्षजचतूराशिप्रमाणयोगेनोन्मण्डलेलगति। स्वक्षितिजेतुद्विराशिचरखण्डयोगतुल्यकालेनपू
र्वमेवलगति। अतोद्विराशिचरखण्डोनंनिरक्षजचतूराशिमानंस्वदेशेचतूराशिप्रमाणंस्यादितिजातम्। अस्मिंस्त्रि
राशिचरखण्डोनत्रिराशिनिरक्षोदयंप्रमाणयोगरूपेणस्वदेशजत्रिराशिप्रमाणेनोनीकृतेतृतीयराशिचरार्द्धयुक्तं
निरक्षजचतुर्थराशिमानंस्वदेशेचतुर्थराशिमानंस्यादितिजातम्। तथाचबालावबोधार्थंबीजक्रिययालिख्यते।
तत्रस्वदेशजत्रिराशिप्रमाणयोगः। निरक्षज त्रिराशिप्रमाणम् १ त्रिराशिचरार्द्धम् १। अयमस्मात् निचराप्र १
द्विराच १। चतूराशिमानयोगात्शोध्यः। तत्रनिरक्षजत्रिराशिप्रमाणयोगेनिरक्षजचतूराशिप्रमाणयोगात्शोधिते
निरक्षजे चतुर्थराशिप्रमाणमेवावशिष्यते। अथत्रिराशिचरखण्डयोगःक्षयगतोद्वि
राशिचरखण्डयोगात्क्षयगतात्शोध्यमानःसंशोध्यमानमृणंस्वंस्यादित्यादिनाधनगतोभवति। अथधनर्णयोरन्त

ग्नमिवदृश्यतेतदस्मात्क्षितिजम्।तथाचमत्पद्यम्।अवनौगगनंसमन्ततःसततंलग्नमिवाऽवलोक्यते।क्षिति
पृष्ठनिवासिमानुषक्षितिजंतद्गुणकानिरूचिरे॥तस्यनिरक्षक्षितिजेनयदूर्ध्वाधरमन्तरंतच्चरम्।दिग्द्वयेऽपि
चरसत्त्वेनास्यैकदिक्त्वाभिप्रायेणचरार्द्धत्वेनैतदुपदिश्यते।तथाचान्तरभूतेनस्वस्वचरार्द्धेननिरक्षोदयायु
तोनाःकर्तव्याःस्वोदयाभवन्तीत्युत्सर्गः।वस्तुतस्तुमेषादिरुन्मण्डलेक्षितिजेचसमकालमेवलगतिक्षितिजो
न्मडलसंपातएवमेषादेरुदयस्थानात्मेषान्तःपुनर्मेषनिरक्षोदयासुभिरुन्मण्डलेलगति।स्वकुजेतुमेषचर
खण्डतुल्यकालेनपूर्वमेवलगतीत्यतःप्रथमराशिचरखण्डोनंप्रथमराशिनिरक्षोदयप्रमाणंस्वदेशेप्रथमरा
शिप्रमाणंस्यादित्युपपन्नम्।एवंमेषादेर्वृषान्तोद्विराशिनिरक्षोदयप्रमाणयोगेनोन्मण्डलेलगतिस्वकुजेतुद्विरा
शिचरखण्डयोगतुल्यकालेनपूर्वमेवलगति।अतोद्विराशिचरखण्डोनंद्विराशिनिरक्षोदयमानंस्वदेशेद्विराशि
मानंभवतीत्युपपन्नम्।तत्रप्रथमराशिप्रमाणेनयावदूनीक्रियतेतावत्केवलंद्वितीयराशिप्रमाणमेवावशिष्यत
इतिप्रथमराशिचरार्द्धोनप्रथमराशिनिरक्षोदयप्रमाणरूपे प्रथमराशिमाने
द्वितीयराशिमानादनन्तरोक्ताच्छोधितेद्वितीयराशिचरार्द्धोनंद्वितीयराशिनिरक्षोदयप्रमाणंस्वदेशेद्वितीयराशि

प्रौ॰ म॰ नांशशब्देन क्रान्तिपातः। क्रान्त्यर्थं पातः क्रान्तिपात इत्यन्वर्थसंज्ञेयम्। पातो नाम नाडीवृत्तक्रान्तिवृत्तयोः संपातः
८ क्रान्त्यभावे यावान् ग्रहश्चक्रशुद्धः स क्रान्तिपातः स्यात्। अस्यैव मुञ्जालाद्यैरयनचलनमिति नाम कृतम्। यतोऽने
न क्रान्तिपातेनायनस्य विषुवद्वृत्तापवृत्तसंपातात् प्रवृत्तराश्यन्तरगमनस्य यथास्थितक्रान्तिवृत्तस्यैवेत्यन्त
मधिकृत्य प्रवृत्तराश्यन्तरगमनात् प्राक्पश्चाद्वा चलनं जायत इत्यतोऽयनचलनमिति युक्तम्। अयनचल
नांशा एव (इति) कैश्चिल्लाघवादयनांशा इति व्यवह्रियन्ते। कथं पुनः प्राक्पश्चाद्वा चलनमित्येतदुच्यते। इष्टेऽह्नि मध्याह्ने
द्वादशाङ्गुलशङ्कोश्छाया लक्षणीया। ततः दिनार्द्धद्युते स्त्रिज्यकाघ्न्या हृतायाः स्वकर्णेन चापांशकाः स्युर्नतांशाः।
दिनार्द्धवियुक्ता युतास्ते पलांशैरुदग्दक्षिणे भाग्रकेऽर्कोपमः स्यात्॥ ततः क्रान्तितो वैपरीत्येन भानुर्भवेदिति भा
स्कराचार्योक्त्या भास्करः साध्यः। परं स सायनः स्यात् क्रान्तेः सकाशात् साधितत्वात्। तथा च करणोक्तवर्त्मनाऽ
न्योऽपि तात्कालिकः स्पष्टभास्करः साध्यः। तयोरन्तरमयनांशाः स्युः। तत्र करणागतेऽर्के छायार्कादूने धनायनांशाः।
अधिके ऋणायनांशाः। धनायनांशेषु प्राक्चलनमृणायनांशेषु प्रत्यगिति वेदितव्यम्। तस्मादसौ क्रान्तिपातोऽन्व राम:
र्थत्वात् स्वगे क्रान्त्यानयनाय योज्य इति सिद्धम्। क्रान्तिवशाच्चरं चरवशादुदया उदयवशाल्लग्नमतो लग्नार्थमर्केऽ ८

रमेव योग इति कृते तृतीयराशिचरखण्डं पनगतमवशिष्टम्। अतस्तृतीयचरार्द्धयुतं निरक्षज चतुर्थराशिमानं स्व
देशे चतुर्थराशिमानं स्यादिति जातम्। अथ मेषादेः सिंहान्तोऽयमक्षज पञ्चराशिमानयोगेनो दृत्ते लगति। स्वक्ष्मजे तु प्र
थमराशिचरार्द्धकालेन पूर्वमेव लगत्यतः प्रथमराशिचरार्द्धोनं निरक्षजपञ्चराशिमानं स्वदेशजपञ्चराशिमानं स्या
दिति जातम्। अस्माच्चतूराशिप्रमाणयोगे प्राग्वत् शोधिते द्वितीयराशिचरार्द्धयुतं व्यक्षज पञ्चमराशिमानं स्वीयप
ञ्चमराशिमानं स्यादित्युपपन्नम्। एवमजादेः कन्यान्तोऽयक्षजषड्राशिमानयोगतुल्यकाले नो दृत्ते क्षितिजे च लगति।
अत्रापि स्वदेशजपञ्चमराशिमानयोगे शोधिते प्रथमराशिचरार्द्धयुतं व्यक्षज षष्ठराशिमानं स्वदेशजषष्ठराशिमानं
स्यादिति सिद्धम्। अतो निरक्षोदया उत्क्रमस्था उत्क्रमस्थैश्चरखण्डैः स्वैर्युक्ताः कर्कादित्रयाणां मानानि स्युरिति निष्प
न्नम्। अनयैव युक्त्या साधितानि तुलादेरनुलोमं मीनान्तावधिकराशिमानानि कन्यान्ताद्विलोमं मेषाद्यवधिकराशि
मानतुल्यानि भवन्त्यत एतान्येवोदयमानानि विपरीतानि तुलादिषण्णां मानानि स्युरिति सिद्धम्। तदुक्तं सिद्धान्तशि
रोमणौ। क्रमोत्क्रमस्थाश्चरखण्डकैः स्वैः क्रमोत्क्रमस्थैश्च विहीनयुक्ताः। मेषादिषण्णामुदयाः स्वदेशे तुलादितोऽ
मी च विलोमसंस्थाः॥ इति। अथार्के लग्नानयनार्थमयनांशा योज्यन्ते तत्कारणमयनांशस्वरूपं च निरूप्यते। अथ

यनांशायोज्या इतियुक्तम्। उक्तं च श्रीभास्कराचार्यैः। क्रान्तिवशाद्धरमुदयाश्चरदललग्नागमेततः क्षेप्याः इति।
एतत्तु धनायनांशविषयम्। ऋणायनांशास्तु वियोज्या इत्यनुक्तमपि बुद्धिमता ज्ञेयम्। ऋणायनांशा अपि पूर्वे
ष्विता इति श्रूयते। तथा च वराहसंहितायाम्। आश्लेषार्द्धाद्दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम्। आसीत्तदा
नूनं येनोक्तं पूर्वशास्त्रेषु॥ पूर्वशास्त्रेषु कश्यपसंहितादिषु। ऋणसंज्ञपश्चिमसत्र्यंशत्रयोविंशत्ययनांशेष्वे
व २३।२० इदं संभवति। तस्माद्वराहसत्ताकाले धनायनांशा आसन्। अधुनापि धनायनांशा एव न त्वयनाय
नांशा इति बोद्धव्यम्। यत्तु भूनेत्रतिथ्युन्मिते १५२१ शालिवाहनशकयातवर्षगणेन तु सांप्रतं सार्द्धषोडशाय
नांशा ऋणगताः सन्ति। छायार्कात् करणागतस्यार्कस्याल्पत्वात्। इति वदता केनचिन्मौहूर्तिकेन छायार्कात्क
रणागतेः स्वेऽस्त्यृणायनांशा इति स्वीकृतम्। तदसदेवेति वयं ब्रूमः। यदि सांप्रतमृणायनांशास्तर्हि ते लग्नानय
नार्थमर्के वियोज्याः स्युः। किं चायनांशहीनं तनुः स्यादित्यत्रापि संशोध्यमानमृणं स्वं स्यादित्यादिनाऽयनांशयुक्तं त
नुः स्यादिति प्रसज्येत। अपि च विषुवद्वृत्तात् क्रान्तिवृत्तावधि दक्षिणोत्तरगमनं क्रान्तिरिति विषुवत्क्रान्तिवृत्तपा
तसंपाते क्रान्तेरभावस्तत्र सायनग्रहदोर्ज्याया अप्यभावेन भाव्यमतस्तत्र सायनग्रहः शून्यराश्यादिरिति ताज

ग्रो॰म॰ त् सर्ववादिसिद्धम्। अथ प्राक्चक्रे चलिते संपातोपि मेषादेः प्रागेव भवतीति तत्रस्थो ग्रहो मेषादेः सकाशान्न्यून
९ व भवत्यतस्तत्रायनांशयोगेनैव शून्यराशिता भवति। अयनांशशोधने तु शून्यराश्यादिता न कथमपि स्यादिति
दूषणान्तरम्। न च ऋणायनांशा अपि स्योऽस्यादिति वाच्यम्। तथा सति धनर्णयोरन्तरमेव योग इति सिद्धान्तो व्याकु
प्येत। अन्यच्च। खेटेऽयनांशे घटपूर्वके स्वमस्वं क्रियाद्येस्तु रिमेऽयनांशाः इति प्राचीनोक्तप्रकारेणापि इदानीं धना
यनांशा लभ्यन्तेऽतस्तैः सह विरोधोऽपि दूषणम्। तस्मादिदानीं करणागतार्कात् छायार्कस्याधिकत्वेन चक्रस्य प्रा
क्चलितत्वात् धनायनांशा इत्यवधेयम्। अत एव तात्कालिकोऽर्कोऽयनभागयुक्त इति संगच्छते। छायार्कात्
करणागतेऽर्के न्यूने प्राक्चक्रं चलितं ज्ञेयम्। तदा धनायनांशा इत्यर्थः। धनायनांशा एवाधुना सन्तीति सौरभाष्ये
श्रीमन्नृसिंहदेवज्ञैरप्युक्तम्। ब्रह्मसिद्धान्तेऽपि। छायार्कार्कान्तरांशास्तु चलांशाः स्वमिनाधिके। छायार्केत्वृणमूने
प्राक्पश्चाच्चक्रं चलम्बते॥ स्पष्टार्थमेतत्। तस्मात् करणागतादधिके छायार्के ऋणायनांशा इति मतं प्रत्याख्येयमे
व। अथोदयैः साध्यमानं लग्नं नाडीमण्डलक्रान्तिमण्डलसंपाताद्यायाति। अपेक्षितं च रेवतीयोगतारकत इत्यय राम:
नांशहीनं क्रियते इति स्पष्टम्। अन्ये तु। लग्नं सायनमेव। नायनांशहीनं कार्यम्। मुनिभिरनुक्तत्वात् सायनादेव ९

3610

फलादेशः कर्तव्य इत्याहुस्तन्मन्दम् । एतच्च शाकल्यसंहितायां पञ्चमाध्याये दृक्कर्मोपसाधने । चलसंस्कृतलग्नज्यालम्बज्ये चेद्भवत्यपि ॥ चलोऽयनांशस्तैर्धनगैर्युक्तः कृतो ग्रहः संस्कृतमित्युच्यते । यद्यत्र भगवतो ब्रह्मणः सायनमेव लग्नमभिमतं स्यात्तर्हि पुनरयनांशयोजनं नोक्तं स्यात् । सायनलग्नेऽयनांशयोजनेन द्विगुणायनांशयोजितादिति जायते । द्विगुणायनांशयोजनं तु वासनाशून्यत्वादन्यार्षग्रन्थेष्वप्रसिद्धत्वाच्चानुपपन्नम् । ततो निरयणमेव लग्नं कार्यमित्याशयोऽस्य मे । तस्मादयनांशहीनं तनुः स्यादिति वै समञ्जसम् । पुनराहुरेकदेशिनः । चलांशसंस्कृतः स्पष्टग्रह एव स्फुटग्रह इति शाकल्योक्तेरयनांशयुक्ता एव ग्रहाः स्पष्टाः स्युः । तेभ्य एव यात्रादिना [illegible] सर्वजातकादौ फलादेशः कर्तव्यः । तथा सायनयोरेव चन्द्रार्कयोरन्तरात्तिथिः साध्या । नहि नैसायनादेव मासप्रवेशो [illegible] ऽपि सायनरवीन्द्वोर्योगादेव साध्य इति । तदप्यतिमन्दम् । एतच्चलांशसंस्कृत इत्येवोत्तरार्द्धमिदम् । अयनाभ्युपगमादेतस्योपचारश्च चोदितः । अस्यार्थः एतस्य चलांशसंस्कृतस्य ग्रहस्य स्पष्टग्रहत्वं किन्तु कार्यान्तरवशात् स्पष्टत्वेनोपचर्यत इति भावः । तत्र हेतुमाह । अयनाभ्युपगमादिति । अयनं राश्यन्तरगमनं तस्याभ्युपगमस्तस्मात् । क्रान्तिसाधनार्थमिति तात्पर्यम् । इत्युपचारः क्रियतेऽस्तो नायं स्पष्टग्रहः ।

गै॰म एतद्व्यक्तमुक्तंवृद्धवसिष्ठसिद्धान्ते। खचराश्चलन्तितस्मात्पूर्वेयुक्ताश्चपश्चिमेहीनाः। तस्मादपमच्छन्न।
चरदललग्नादिकंततःसाध्यम्॥ रोमशेऽपि। तत्संस्कृतग्रहात्क्रान्तिलग्ननत्युन्नतिस्फुटम्। इति। सोमसि
द्धान्तादिष्वप्येवमेव। अतोऽयनांशसंस्कृताग्रहाःक्रान्तिसाधनार्थमेवस्पष्टाभवेयुर्नतिथ्यादिसाधनार्थंफलादे
शार्थंचेत्यत्रप्रौढंनिर्व्यूढम्। तस्मात्परिहार्योऽयमपावनयावनमतानुसारिणोऽपिराजपथः। पुनर्भवेदेवम्। य
दिस्पष्टग्रहसंस्कारत्वेनैवचलांशयोजनंमुनीनामभिप्रेतंस्यात्तर्हिमन्दशीघ्रफलादिस्पष्टग्रहोपकरणसंस्का
रप्रकरणएवोक्तंस्यात्। क्रान्तिप्रकरणेऽभिहितमतःक्रान्तिसाधनेतस्योपयोग इतिबालैरपिबुध्यते। नचैवं
ग्रहाणांनिरयणत्वेसंक्रान्तिरपिनिरयणैवास्तामितिवाच्यम्। इष्टापत्तेः। संक्रान्तिषुतथाकालस्तदीयेऽप्यय
नेतथा। इतिमुनिभिरुक्तत्वात्सायननिरयणसंक्रान्त्योरुभयोरपिपुण्यकालः। यद्यपिराश्योनिरयणाइति
निरयणैवसंक्रान्तिस्तस्याएवव्यवहारयोग्यत्वम्। तथापिचलसंस्कृततिग्मांशोःसंक्रमोयःससंक्रमः। अजाग
लस्तनइवराशिसंक्रान्तिरिष्यते॥ इतिवृद्धवसिष्ठसिद्धान्तोक्तेः सायनसंक्रान्तौपुण्याधिक्यमितियुक्तमुत्पश्या रामः
मः। अतएवाहुरस्मत्पितृव्यचरणाःश्रीशिवदेवज्ञामुहूर्तचूडामणौ। अयनांशकलाःस्पष्टरविगत्युद्धृताःपुरा। १०

दिनाद्यैर्बहुपुण्याः स्युर्मेषादिभ्यश्चलक्रमाः॥ इति। तस्मात्सायनग्रहेभ्यस्तिथ्यादिसाधनमयुक्तत्वादार्षविरु
द्धत्वाद्वयावत्प्रामाणिकैरकृतत्वाच्च नकार्यमित्यलं प्रसङ्गागतया मतान्तरदूषणकथाप्रस्तावनया। एतदु
क्तं प्रसक्तानुप्रसक्त्या श्रीपतिटीकाकारैरनुक्तमपि। यन्मयाल्पमतिनाधुनाकृतं गोपिराजमतखण्डनं वरमात
च्छिवस्य मुगुरोर्दयाभरालोकनप्रभववैभवं किल॥ इदानीं प्रकृतमनुसरामः। उदयलग्नं षड्भयुतमस्तलग्नं भ
वति। उदयास्तक्षितिजयोर्मध्येऽर्द्धस्यैवापमण्डलस्य व्यवस्थितत्वात्। तदुक्तं गोले। योऽभ्युदेति समयेन येन त
त्र भमोऽस्तमुपयाति तेन च। राशिरूर्ध्वमपमण्डलं क्षितिजादर्धमेव सततं यतः स्थितम्॥ इति। अतः शोभनमुक्तम
स्तर्क्षं सषड्भः स च, इति। एवं भावद्वयमभिधायेदानीमन्यभावद्वयसाधनं विवक्षुस्तावत्तदङ्गीभूतं नतोन्नत
साधनं वृत्तार्धेनाह॥ ॥ रात्रेः शेषमितं युतं दिनदलेनाह्नो गतं शेषकं विश्लेष्यं खलु पूर्वपश्चिमनतं
त्रिंशच्च्युतं चोन्नतम्॥ ॥ रात्रेः शेषमिति। इष्टं भुक्तं वा दिनदलेन युतं सत्खल्विति निश्चयेन क्रमेण पूर्वप
श्चिमनतं स्यात्। एतदुक्तं भवति। यद्यर्धरात्रानन्तरं जन्म स्यात्तदा रात्रिशेषं दिनार्धेन युक्तं कार्यं पूर्वनतं स्यात्।
यद्यर्धरात्रात्प्राक् जन्म तदा रात्रिगतं दिनार्धयोज्यं पश्चिमनतं स्यात्। अह्नो दिनस्य गतं शेषकं वा दिनदलेन वि

ग्रो०म० श्लेष्यमन्तरितं कार्यंदिनदलात् शोध्यमितियावत्। क्रमेणपूर्वपश्चिमनतंस्यात्। अथोन्नतमाह। त्रिंशच्च्युतंनति
ति। नतंत्रिंशतः च्युतंशुद्धंसदुन्नतंस्यात्। पूर्वनतेत्रिंशच्छोधितेपूर्वोन्नतं,पश्चिमनते त्रिंशच्छोधितेपश्चिमोन्न
तमित्यर्थः। चकारः समुच्चयार्थः। अत्रोपपत्तिः। खगोलस्यप्रागपरविभागेनकपालद्वयंभवति। तत्रनिशामध्यात् म
ध्याह्नपर्यन्तंत्रिंशद्घटिकान्तरेणभानोरारोहणमार्गावधिप्राक्कपालम्। तथामध्याह्नात् निशीथपर्यन्तंत्रिंशद्घटिकान्तरे
णभानोरवरोहणमार्गावधिप्रत्यक्कपालम्। एवंप्रागपरकपालयोर्मध्येमध्याह्नापेक्षयायावतीभिर्घटीभिः सविता
नम्रउपलभ्यतेसनतकालः। तथामध्यरात्रापेक्षयायावतीभिर्घटीभिरुच्चउपलभ्यतेसउन्नतकालः। एवंतौत्रिंशतः
शुद्धावन्यथाभवतः। ततः खगोलस्यक्षितिजसंनिवेशनेनविभागचतुष्टयंभवति। तथाचप्राक्कपालेसूर्येक्षितिजा
दूर्ध्वस्थेसतिदिनगतंतथाधःस्थितेरजनीशेषम्। पश्चिमकपालेतुकुजोर्ध्वस्थेदिनशेषमधःस्थेरात्रिगतम्। एवंदि
नगतशेषेदिनार्धात् शोधितेतथारात्रिशेषगतेदिनार्धेनयुतेसतीप्रागपरनतेस्तः। अतउपपन्नंरात्रेःशेषमित्या
दि। नतोन्नतेत्रिंशद्घटीमध्येऽतोनतंत्रिंशच्छुद्धमुन्नतंस्यात्। अतोयुक्तमुक्तंत्रिंशच्च्युतंचोन्नतमिति। अथयदर्थमेता रामः
वानुपक्रमस्तदधुनादशमचतुर्थभावसाधनंवृत्तोत्तरार्द्धेनाह॥ ॥ स्यात्पूर्वोन्नतषड्युक्तरवितःपश्चान्न ११

तादित्यतो यल्लङ्कोदयकेऽस्य लग्नमिव तन्माध्यं सषड्भं सखम्॥२॥ यदिति। पूर्वोन्नतषड्भयुक्तरवितः लङ्कोदयकैर्लग्नमिव लग्नं यत् भवेत् तत् माध्यं स्यादिति योजना। पूर्वस्मिन् कपाले उन्नतं पूर्वोन्नतम्। षड्भैः राशिषट्केन युक्तश्चासौ रविश्च षड्भयुक्तरविः। पूर्वोन्नतं च षड्भयुक्तरविश्च पूर्वोन्नतषड्भयुक्तरवी ताभ्यामिति पञ्चम्यर्थे तसिः। मध्ये ऊर्ध्वयाम्योत्तरवृत्ते भवं माध्यं दशमलग्नमित्यर्थः। एवं पश्चान्नतादित्यतो लङ्कोदयकैर्लग्नमिव यल्लग्नं तत् माध्यं स्यात्। पश्चान्नतं चादित्यश्च पश्चान्नतादित्यौ ताभ्यामिति पञ्चम्यर्थे तसिः। एतदुक्तं भवति। अर्धरात्रादुपरि दिनार्धपर्यन्तं पूर्वकाले उन्नतमिष्टकालं प्रकल्प्य सषड्भसायनतात्कालिकार्कं सूर्यं प्रकल्प्य लङ्कोदयान् स्वोदयान् प्रकल्प्य तद्भोग्यभागैरुदयो हतः खद्त्यादिना लग्नवद्यत् साधितं तद् मध्यलग्नं स्यात्। एवं दिनार्धादुपरि रात्र्यर्धपर्यन्तं पश्चिमकाले नतमिष्टकालं प्रकल्प्य केवलसायनतात्कालिकार्कं सूर्यं प्रकल्प्य लङ्कोदयानुदयान् प्रकल्प्य तद्भोग्यभागैरित्यादिना लग्नवद्यत् साधितं तद् मध्यलग्नं स्यात्। तद् मध्यलग्नं सषड्भं षड्राशियुक्तं सत् सुखं चतुर्थलग्नं भवति। अत्रोपपत्तिः। मध्याह्ने सूर्यतुल्यमेव मध्यलग्नं स्याद् मध्यलग्नमिति दक्षिणोत्तरे इत्युक्तत्वात्। मध्याह्नादग्रे प्राव[illegible]षमध्यलग्नमपेक्ष्य तद् नतमाह्ने।

पा॰भ॰
२

तुल्यमेवेष्टकालं प्रकल्प्य सूर्यात् क्रमलग्नं साध्यं तद् मध्यलग्नं भवति। यथा॥ सूर्योदये सूर्यतुल्यमुदयलग्नं
सूर्योदयादिष्टघटीभिः क्रमेणोदयलग्नं साध्यते तथात्रापि। सूर्योदयात् पूर्वं यथोत्क्रमेण लग्नं साध्यते तेनैव
पि मध्याह्नात् पूर्वं पूर्वनतनाडीतुल्यमेवाभीष्टकालं प्रकल्प्य सूर्यात् ऋणलग्नं साध्यं तद् मध्यलग्नं स्यात्। अतः
सिद्धमेतत् पूर्वनते सूर्याद्विलोमलग्नं साध्यं पश्चिमनते तु सूर्यात् क्रमलग्नं साध्यं मध्यलग्नं स्यादिति। अत एवोक्तं
वसिष्ठसिद्धान्ते। लङ्कोदयैर्लग्नमृणं विलोमं खमध्यजं पूर्वनतासुभिर्यत्। पश्चान्नतप्राणचयैर्धनाख्यं तत् षड्भ
युक्तं चरसातलाख्यम्। इति। एतत् षड्राशियुक्तं चतुर्थलग्नं स्यात्। ऊर्ध्वाधरयाम्योत्तरवृत्तयोर्मध्येऽधस्यैवाप
वृत्तस्य स्थितत्वात्। यद्वा। पूर्वोन्नतात् क्रमलग्नं पश्चिमोन्नतादृणलग्नं साध्यं चतुर्थलग्नं स्यात्। तत् षड्राशियुतं
मध्यलग्नं भवति। ऋणलग्नसाधनार्थं पद्यद्वयम्। तात्कालिकोऽर्कोऽयनभागयुक्तस्तद्भुक्तभागैरुदयो हतश्चास्व
ग्न्युद्धृतस्तं रविभुक्तकालं पलीकृतात् पूर्वनताद्विशोध्य॥ तत्र्यष्टतो राश्युदयांश्च शेषमशुद्धहृत् खाग्निगुणं लवा
द्यम्। मेषाद्यशुद्धर्क्षमितैर्विशुद्धं ततोऽयनांशोनमृणाख्यलग्नम्॥ इति। तस्मात् पश्चिमनते सति सूर्यात् पश्चिमनत राम:
मेवेष्टकालं प्रकल्प्य लङ्कोदयैः क्रमलग्नं साध्यं मध्यलग्नं स्यादिति सिद्धम्। अत उपपन्नं पश्चान्नतादित्यतोऽयल्लङ्को १२

५ मध्यलग्नं तु सषड्भसूर्यतुल्यं मध्यरात्रादग्रे यावतीषु घटीषु

दयकेऽष्वलग्नमिव तन्मध्यमिति। पूर्वनते तु पूर्वनतमिष्टकालं प्रकल्प्य लङ्कोदयैः सूर्यादृणलग्नं साध्यं तन्म
ध्यलग्नं भवतीति प्राप्ते परमकारुणिकेनाचार्येणऋणलग्नसाधने शिष्यक्लेशो माभूदिति प्रकारान्तरेणऋण
लग्नानपेक्ष्यैवमध्यलग्नसाधनमरचि। तद्यथा। पूर्वोन्नतमिष्टकालं प्रकल्प्य सषड्भसूर्यात् क्रमलग्नमेव म
ध्यलग्नं स्यादिति। अत्रेयं युक्तिः। पूर्वकपाले मध्यलग्नं साध्यते। तत्र पूर्वकपालारम्भो मध्यरात्रे। तत्र सूर्यतुल्य
मेव चतुर्थलग्नं मध्यलग्नमवगन्तव्यं तत एव पूर्वोन्नतघटिकाद्भिति बालोऽपि जानाति। अतः सषड्भसूर्यात् पूर्वोन्न
तस्य क्रमिकेष्टकालत्वात् क्रमं लग्नं मध्यलग्नं स्यादिति सिद्धम्। अत्र प्रतीत्यर्थमुदाहरणम्। काश्यां पलभा पादो
नषडङ्गुलमिता ५।४५ यदैतावास्तात्कालिकोऽर्कः १।५।५२।३७ अयनचलनांशाः १८।१० रात्रिमानम्
२६।५० तदार्कोदयात् पूर्वमेकघटींमितेष्टकाले तात्कालिकार्कादानीतमिदं विलोममुदयलग्नम् ०।२९।
३३।२० । अथवा सषड्भतात्कालिकार्कात् २५।५० एतद्धटीतुल्यमिष्टकालं प्रकल्प्य साधितमिदं क्रमेणोदय
लग्नं च ०।२९।३३।२० सममेव यथा भवति तथैवात्रापि केवलसूर्यात् पूर्वनतमितेष्टकाले साधितमृणलग्नं स
षड्भसूर्यात् पूर्वोन्नतमितेष्टकाले साधितं क्रमलग्नं च सममेवोपजायत इति मन्दानां प्रतीतिरुत्साद्या। अतउक्त

यत् पूर्वोन्नतषड्गुणकरवित, इत्याद्युपपन्नम्।अत्र नताज्ञाने सप्तमभावान्माध्यसाधने लग्नाच्चतुर्थभावसा-
चोक्तं श्रीदामोदरेण।अथास्तलग्नाद्विवद्दिनार्धतन्नाडिकाभिस्ततएवलग्नम्।लङ्कोदयैस्तद्दशमाह्वयं स्याल्लग्ना
त्तथा रात्रिदलोत्थमम्बु॥उत्तानार्थमिदम्।अत्रोपपत्तिः।सूर्यास्ते किल सूर्यतुल्यमस्तलग्नं भवति।ततो दशमलग्न
न्तूर्ध्वयाम्योत्तरवृत्ते सौम्ययाम्यगोलयोः किंचिदधिकोनत्रिभान्तरे भवति।तयोरन्तरं सूर्यतुल्यास्तलग्नोत्पदिन
र्धनाडीतुल्यम्।अतः सूर्यतुल्यास्तलग्नात् सूर्यतुल्यास्तलग्नोत्पन्नदिनदलमिष्टकालं प्रकल्प्य यत् क्रमलग्नं सा
ध्यते तद्दशमलग्नं सूर्यास्ते यथा भवति तद्वदेव इष्टकालीनास्तलग्ना तदुत्पन्नदिनार्द्धेन यावल्लग्नं साध्यते तावत्
दशमलग्नं भवतीति सर्वं निरवद्यम्।तथा तेनैव प्रकारेणोदयलग्नात् रात्रिदलोत्पन्नं अम्बु चतुर्थलग्नं स्यात्।अ
स्योपपत्तिः प्राग्वदेव।अथैतन्माध्यं लङ्कोदयैः साध्यते तत्कारणमुच्यते।मेषादौ लङ्काक्षितिजे यादृक्संस्था सैव मे
षादावूर्ध्वयाम्योत्तरवृत्ते।तदत्रापि मेषादिसंबन्धानन्तरं मेषान्तो लङ्कोदयप्रमाणेनैव लगतीत्यतो मध्यलग्ना
नयने लङ्कोदया एव ग्राह्याः।यद्वा।राशीनामसवस्त्रिविधाः।उदयासवो मध्यासवोऽस्तासवश्चेति।तत्रोदयासूनाम
स्तासूनां च योगार्धं मध्यासवो भवितुमर्हन्ति।ते तु लङ्कोदयासुतुल्या एव।अतो मध्यलग्नं लङ्कोदयैरेव साध्यमित्युप

पन्नम्॥ इदानीमवशिष्टभावसाधनमाह॥ ॥ त्र्यंशोऽव्यस्तखभस्य भूयमहतो योज्यस्तनौ द्विच्युतो वस्यै
ते पि च साङ्कभास्तनुमुखाः॥ ॥ त्र्यंश इति। विगतमस्तं सप्तमं यस्मादिति व्यस्तम्। तच्च तत् खभं च व्य
स्तखभम्। खभं नाम मध्यलग्नम्। व्यस्तखभस्य त्र्यंशो राश्याद्दिर्द्विष्ठः। एकत्र भुवा एकेन हतः गुणितः अपरत्र
यमाभ्यां द्वाभ्यां हतः सन् तनौ लग्ने योज्यः क्रमेण द्वितीयभावौ भवतः। पुनः स एव त्र्यंशो द्वाभ्यां सकाशात् च्युतः
शुद्धस्ततो द्विष्ठः एकत्र भुवा हतोऽपरत्र यमहतः सन् बन्धौ योज्यः। तौ क्रमात् पञ्चमषष्ठभावौ भवेताम्। तेऽनन्त
रानीताश्चत्वारो भावाः साङ्कभाः राशिषट्कयुताः सन्तः परे सुधर्मी पञ्चयभावाः स्युः। एवं तनुमुखास्तन्वादयो द्वादश भावाः
सिध्यन्ति। एभिर्भावैः समग्रं शुभाशुभफलं चिन्त्यमित्यर्थः। अपि च शब्दावनुक्तसमुच्चयार्थौ। अत्रोपपत्तिः। लग्नचतुर्थान्तर्व
र्तिक्रान्तिवृत्तस्य समास्त्रयो भागा द्वितीयादयस्त्रयो भावाः। एवं चतुर्थसप्तमान्तर्वर्तिनः पञ्चमादयो भावास्त्रयः। एवं सप्तमदश
मान्तर्वर्तिनोऽष्टमादयस्त्रयो भावाः। दशमलग्नान्तर्वर्तिन एकादशादित्रयो भावा इति। अथानुपातः। यदि त्रिभिर्भावैर्लग्नचतुर्था
न्तरतुल्यमन्तरं लभ्यते तदैकेन किमिति लग्नचतुर्थान्तरं त्रिभक्तं क्रमादेकद्विगुणं लग्ने योजितं सत् द्वितीयतृतीयभावौ भव
त इति सिद्धे सत्याचार्यैर्यावदेव लग्नचतुर्थान्तरं तावदेव सप्तमदशमान्तरमिति सप्तमदशमान्तरस्यैव त्र्यंशो भूयमह

प्रौ॰ म॰ तोलग्नेयोऽप्यदृत्युक्तम्।अतउपपन्नंत्र्यंशोऽप्यस्तखभस्यभूयमहतोयोऽप्यस्तनाविति।इदानींचतुर्थसप्तमान्त
१४ रस्यत्र्यंशोभूयमहतश्चतुर्थेयोऽप्यःपञ्चमषष्ठभावौस्तइत्यत्रसप्तमदशमान्तरस्यैवत्र्यंशोद्विच्युतश्चतुर्थस
प्तमान्तरस्यत्र्यंशोभवतीतिसप्तमदशमान्तरस्यत्र्यंशोद्विच्युतएकद्विगुणश्चतुर्थेयोऽप्यःसुतरिपुभावौभव
तइतिसम्यगुक्तंद्विच्युतोबन्धुर्नितिनि।नन्वत्रसप्तमदशमान्तरत्र्यंशोद्विच्युतश्चतुर्थसप्तमान्तरत्र्यंशोभवती
तियदुक्तंतत्रकायुक्तिरितिचेत्।शृणु।चतुर्थसप्तमान्तरसप्तमदशमान्तरयोर्योगोराशिषट्कंभवति।चतुर्थद
शमान्तरेणषण्णामेवराशीनांस्थितत्वात्तेषांत्र्यंशोद्वौ।अथचतुर्थसप्तमान्तरेसप्तमदशमान्तरेचकिंचिदूना
धिकमेवराशित्रयंभवति।यथास्वदेशेप्रथमंतथाद्वितीयंराशिषट्कंत्रिंशद्घटीभिःसमुदेति।परंपञ्चदशनाडीभी
राशित्रयंनोदेतितद्वदत्रापि।यद्यपिचतुर्थदशमान्तरेराशिषट्कमास्तेतथापिचतुर्थसप्तमान्तरेसप्तमदशमान्त
रेचराशित्रयंनास्ति।अत्रेदमवगन्तव्यम्।यदिचतुर्थसप्तमान्तरंराशित्रयादूनंतदासप्तमदशमान्तरंराशित्रयाधि
कमेवस्यात्।एवंतदाधिक्येतस्यन्यूनता।अथतस्यत्र्यंशोऽपिकिंचिदूनाधिकंरूपंत्र्यंशद्वययोगोद्वयम्।अतःसप्त राम:
मदशमान्तरत्र्यंशोद्विच्युतश्चतुर्थसप्तमान्तरत्र्यंशःस्यात्।एवंचतुर्थसप्तमान्तरत्र्यंशोद्विच्युतःसप्तमदशमान्त १४

रन्त्यंशो भवतीत्यतो युक्तियुक्तं निरुक्तं द्विच्युत इति। अथ सप्तमदशमान्तरन्त्यंशो भूयमहतो जायाभावे योज्यः क्र
मान्मृत्युधर्मभावौ भवत इत्यत्र जायाभावस्य लग्नात्स द्वाश्यन्तरितत्वाल्लग्न एव योजितो धनसहजभावौ जातौ। अ
थतौ एव षड्युतौ तौ मृत्युधर्मभावौ स्तः। एवं दशमलग्नान्तरत्र्यंशः एक द्विगुणो दशमे योज्यो लाभव्ययभावौ स्त इत्यत्र
दशमस्य चतुर्थात् षड्राश्यन्तरितत्वात् चतुर्थ एव योजितः पञ्चमषष्ठभावौ जातौ अथ तौ एव षड्भयुतौ आयव्यय
भावौ स्याताम्। अत उपपन्नं साङ्कभा इति। यत्तु केनचिद् उक्तं भावसाधनमार्षशास्त्रादू अभिहितत्वात् निर्मूलमितित
त् तुच्छम् यतः पराशरहोरायाम्। लग्नसुखात् सुखं कामात् कामं खात् खं च लग्नतः। त्र्यंशमेक द्विगुणितं युञ्ज्यात्
लग्नादिषु क्रमात्॥ पूर्वापरयुते र द्वे संधिः स्याद्भावयो र्द्वयोः। एवं द्वादशभावाः स्युर्भवन्ति हि भसंधय इति। अथ सं
धिसाधनमाह॥ ॥संधिर्द्वियोगार्द्धितः॥ ॥द्वयोर्भावयोर्योगोर्द्धितो व्याप्तः सन् संधि र्भवेत्। अत्र भावद्वययोगकरणे
चक्रा१२धिकतायां चक्रं नत्याज्यम्। तथा प्रथमभावे द्वौ कादशवाराश्यो ग्रिम भावे भून्यमेको वाराशिः। तदा भूय्ये
कस्यानेद्वादशराशयोऽधिका ग्राह्या इत्यभिसंधिः। असौ संधि र्द्विविधः। आरम्भविरामभेदात्। तथाहि। लग्नद्वितीययो
र्योगार्द्धं लग्नस्य विरामसंधिः। स एव द्वितीयस्य आरम्भसंधिः। एवं सर्वेषामपि। इदमत्रावधेयम्। आरम्भसंधेरूनो ग्रहो

प्रौ·म· गतभावजातं फलं करोति। वि[illegible]संधे रधिकोऽग्निमभावजातं फलं करोति। आरम्भसंधे रनल्पो विरामसंधे-
१५ रल्पोऽग्रहस्तु स्वाधिष्ठितभावजं फलं करोति। तथा च आहुः। आरम्भसंधे द्युचरो यदीनः फलं ददा स्या दिमभावजा-
तम्। विरामसंधे रधिकस्तदानीमागामिभावोत्थफलप्रदः स्यादिति। अत्र वासनाश्रीपतिपद्धतिटीकायां तु नरसिंहै-
रुदितासैवोच्यते। राश्यंशकलाविकलात्मकलग्नस्य चरमविकलारूपमेव नितान्तसूक्ष्मरेखाकारक्रान्तिवृत्तस्थ-
लं नितान्तसूक्ष्मरेखाकारे क्षितिजे लग्नं भवतीति चरमविकलैव वस्तुतो लग्नम्। एवमधस्तनरेखाकारसूक्ष्मया-
म्योत्तरवृत्तलग्नत्वात् चरमविकलैव च[illegible]र्थलग्नम्। [illegible]मुख्यादितं त्वाद् द्वितीयभावोऽपि चरमविकलैव। एवम-
न्येऽपि भावाश्चरमविकलात्मका एव। चरमविकलातः प्रागपरत्र पुनः सांनिध्यात् लक्षणया लग्नादिपदप्रयोगो
गौणः सांनिध्यं तु युक्तितास्यात् पूर्वभावस्य यावत् पर्यन्तमग्रे तदग्रिमस्य पश्चादपि तावत् पर्यन्तमेव स्वीकरणी-
यमिति द्वादशाद्यमभावयोगार्द्धात्मकसन्धिपर्यन्तं लग्नचरमविकलायाः पश्चात् सांनिध्यं लग्नद्वितीययोगार्द्धा-
त्मकसंधिपर्यन्तं पुनरग्रे सांनिध्यमतः पूर्वसन्धिमारभ्याग्रिमसन्धिपर्यन्तं लग्नव्यवहारः। एवं द्वितीयादिभा- एमः
वव्यवहारोऽपि। इह भावस्य चरमविकलास्थोऽग्रहो भावस्य राश्यंश[illegible]विकलाभिः समदृष्टियावत्प्राधान्येन १५

तस्मिन्भावेमुख्येवर्त्ततइति तद्भावोक्तसमग्रफलदः। भावस्यचरमविकलातोविकलामात्रन्यूनाधिक्येस
मग्रफलस्यनाशोबाधितोऽनेनापि क्रमेणपूर्वभावसमाप्तिस्थलमग्रिमभावफलारम्भस्थलमेकंसंधिरूपमेव
सिद्धम्। तद्भावमारभ्याग्रिमसंधिपर्यन्तंपूर्वभावफलस्यक्रमेणापचयः। तथापूर्वसंधिमारभ्याग्रिमभाव
पर्यन्तमग्रिमभावफलस्यक्रमेणोपचयः। सन्धौतुप्रथमभावस्यसमाप्तत्वादग्रिमभावस्यानारम्भान्निष्फलो
ग्रहः। सन्धेरूनेग्रहेतुपूर्वभावफलस्यासमाप्तत्वात्पूर्वभावफलम्। सन्धेरधिकेऽग्रिमस्यारम्भादग्रिमभावफ
लमितिसर्वंशोभनम्। प्रथमभावचतुष्टयेसन्धित्रयेचसिद्धेसुगमोपायेनान्यभा   वसन्धिसाधनंमिश्रोक्तपद्ध
तौ॥ त्रिद्विभावैक्रमाद्युक्तौद्वाभ्यांवेदैः सुतद्विषौ॥ लग्नादिभावाः षट्षड्भयुक्ताः सप्तमकादयः॥ १॥ त्रिद्व्येकसन्ध
यस्त्वेकत्रीषुराशियुताः क्रमात्॥ सन्धयः सुखतुर्याद्याः सषड्भाः षडमीपरे॥ २॥ सुतरिपुभावसाधनवासना
मन्दावबोधार्थमव्यक्तक्रिययोच्यते। तत्रलग्नचतुर्थान्तरत्र्यंशद्वयलग्नयोगेतृतीयभावोयंखण्डद्वया
त्मकोवृत्तः॥ ल·च·अं·३ ल·यो·१। चतुर्थसप्तमान्तरैकत्र्यंशः चतुर्थभावयोगेजातःपञ्चमोयम्। च·स·अं·१ च·यो·भ
अनयोरन्तरंतृतीयभावेयावद्योज्यतेतावत्पञ्चमभावोभवतीत्यज्ञोपिजानाति। अतस्तयोरन्तरंसाध्यते। त

त्रसंशोध्यमाने स्वमृणत्वमेतीत्यादिना तृतीयभावः खषड्भात्मकः ऋणगतो जातः। अथ लग्ने चतुर्थी द्विशो
धिते लग्नचतुर्थान्तरमेव जातम्। अस्माल्लग्नचतुर्थान्तरस्य त्र्यंशद्वयेऽपनीते एक एव त्र्यंशोऽवशिष्यते। तत्र चतु
र्थसप्तमान्तरत्र्यंशे योजिते द्वयमेव स्यात्। यत उक्तं प्राक् त्र्यंशद्वययोगो द्वयमिति। अतो द्वययुतस्तृतीयः त्र्यं
मः स्यादित्युपपन्नम्। एवमेव रिपुभावोपपत्तिरूह्या। शेषोपपत्तिरतिसुगमा बालावबोधा च। अथ भावफला
भावं भावस्थाने भावफलसाधनं च वृत्तोत्तरार्द्धेनाह॥ ॥ शून्यं सन्धिषु भावगेऽखिलफलं स्याद्भाव स
न्ध्यन्तरेणाप्तं सन्धिखगान्तरं ह्यय च यं भावाधिकेऽल्पे खगे ॥ ३ ॥ सन्धिषु स्थिते ग्रहे शून्यफलं स्या
त्। भावगे भावांशादितुल्ये खगे अखिलफलं स्यात्। अखिलं संपूर्णरूपमितमिति यावत्। यतोऽत्र सर्वत्र होरिकैः
संपूर्णताद्योतकं रूपमेव कल्पितम्। भावादधिके खगे सति सन्धिखगान्तरं भावसन्ध्यन्तरेणाप्तं भक्तं सत्त
यमवरोहाख्यं फलं स्यात्। भावादल्पे खगे सन्धिखगान्तरं भावसन्ध्यन्तरेणाप्तं सत्तद्यमारोहाख्यं फलं स्यात्।
अयमत्राभिसन्धिः। भावादल्पे ग्रहे आरम्भसन्धिग्रहान्तरमारम्भसन्धिभावान्तरेण भक्तं सद्ग्रहभावफलं
स्यात्। एवं भावादधिके विरामसन्धिग्रहान्तरं विरामसन्धिभावान्तरेण भक्तं सद्भावफलं स्यादिति। अत्रोप

पतिः। आरम्भसन्धिसमे ग्रहे फलस्यारम्भस्ततः क्रमेणोपचयः। भावसमे समग्रफलं रूपमितं ततः क्रमे
णापचयः। विरामसन्धिसमे तु फलनाशः। तदुक्तं श्रीपतिभिः॥ भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फलं भाव
समांशकेषु॥ ह्रासः क्रमाद्भावविरामकाले फलस्य नाशः कथितो मुनीन्द्रैरिति॥ भावसमे ग्रहे फलं परमं तत्र
सन्धिखगान्तरमपि परमं भावसन्ध्यन्तरतुल्यम्। सन्धितुल्ये ग्रहे फलाभावः सन्धिखगान्तराभावश्च। तस्मा
त्सिद्धमेतत्। सन्धिखगान्तरपरमत्वे फलपरमत्वं सन्धिखगान्तराभावे फलाभाव इति। अथानुपातः। यदि भाव
सन्ध्यन्तरतुल्ये न ग्रहसन्ध्यन्तरेण रूपं फलं लभ्यते तदेष्टसन्धिखगान्तरेण किमिति। सन्धिखगान्तरस्य रूपं
गुणस्तस्याविकृतत्वान्नाशः। भावसन्ध्यन्तरं हरः। अतः सन्धिखगान्तरं भावसन्ध्यन्तरेण भक्तं भावफलं भवती
ति सिद्धम्। अत उपपन्नं भावसन्ध्यन्तरेणाप्तमित्यादि। अत्रेदं तत्त्वम्। यदि ग्रहो भावादूनस्तदारम्भसन्धिर्ग्रहाद्ग्र
हाच्च विशोध्यः। यद्यधिकस्तदा ग्रहो भावश्च विरामसन्धेः शोध्यः। तत उक्तवत्फलं साध्यम्। यद्यत्र शोध्यं न शुद्ध्येत्त
दा शोधके द्वादशराशयोऽधिका ग्राह्या इत्यनुक्तमपि बुद्धिमता ज्ञायते। फलस्य स्पष्टत्वचपलत्ववासनाप्रतिपादितप्र
मेयासुगमा च। अत्र विषयद्वैधादनुपातद्वयं कृतं सुन्दरमिश्रैस्तदेकेनैवानुपातेन भावफलं साधयता भगव

श्री·भ· ताचार्येणनादृतंगौरवात्। ऋजुमार्गेणसिद्धतोऽर्थस्यवक्रेणसाधनायोगादितिन्यायाच्च। केचित्तुग्रहेभ्योपिभाव
१७ साधनंकुर्वतेतत्प्रामाणिकैः श्रीनीलकण्ठश्रीधरश्रीपतिभिरनुक्तत्वादयुक्तत्वाच्चनादरणीयम्। किंच। ग्रहभा
वानीलकण्ठादीनांयद्यभिमताभवेयुस्तदादृष्टिसाधनंभावैरेवकृतंस्यान्नतुवक्ष्यमाणप्रकारेण। यतोजातकेस्या
ननियमेनदृष्टिरुक्तास्ति। अपिच। लग्नदशाप्राथम्येलग्नाद्भावाः सन्तीतिभावफलगुणितानिग्रहबलानिदशाङ्क
मबलानिस्वीकृतानि। एवंग्रहभावस्वीकारेरवीन्द्वोर्दशाप्राथम्येलग्नदशाप्राथम्यइवैतद्भावफलघ्नग्रहबलानि
दशाङ्कमबलानिस्युस्तथासतिवक्ष्यमाणप्रकारेणखगोदयबलाद्धि·रिक्त्यनेनदशाङ्कमवीर्यसाधनमुच्छिद्येत। अत
स्माद्ग्रहेभ्योभावसाधनंनैवकार्यमितिसिद्धान्तः। एवंग्रहभावाभावे सिद्धेतत्कालमित्रामित्रादिसुनफानफादियो
गसूर्यचन्द्रकेन्द्रादिविचारेग्रहात्स्थानाधीनोव्यावहारिकमेषवृषादिसंज्ञराशिवशेनैवालग्नात्तुकेन्द्रादिस्थानं
द्विविधम्। मेषादिराशिरूपंभावरूपंचेति। तथासतियत्रप्राचामाचार्याणांराशिपर्यायपदपर्यन्तधावनंस्यपभ
वनादित्यादौतत्रमेषादिराशिरूपाणिव्ययादिस्थानानिग्राह्याणि। यत्रतुदशान्तर्दशादौनराशिपर्यायपदोपादानं रामः
तत्रभावरूपाण्येवस्थानानिग्राह्याणीतिसंक्षेपः। इदानीमध्यायसमाप्तिंगद्येनाह॥ ॥इतिकेशवपद्धतौभावा १७

ध्यायइति॥ ॥इतिसमाप्तः। इतिहेतुप्रकरणप्रकर्षादिसमाप्तिषिल्समरः ॥ सवासनायासमकारिवृत्तिर्दिवाक
रेणामलकेशवोक्तेः॥ पितृव्यसंप्राप्तधियादिमोत्रभावाधिकारः समगात्समाप्तिम्॥ इतिश्रीकृष्णदेवज्ञात्मजनृसिं
हस्यसुतेनदिवाकरेणरचितायांकेशवोक्तजातककर्मपद्धतेष्टीकायांसवासनायांप्रौढमनोरमाभिधायांभावा
ध्यायः प्रथमः॥१॥ ॥भावाध्यायस्यभावार्थव्याख्यायगणकोत्तमः॥ दिवाकरोऽथदृष्ट्याख्यंव्याख्यातिविमलोक्ति
भिः॥१॥ तत्रदृष्टिसाधनाध्यायंवृत्तेनैकेनाह॥ ॥ खैकाग्निद्विखवेदरामयमभूखाभ्राभ्रमेकादिभे द्र
ष्टावर्जितदृश्यकस्यगुरुणाचेदष्टवेदेकृताः॥ मन्देनाङ्कयमेसुजानगगुणेङ्काभादिजाः संस्कृताभाग
घ्नस्यषड्द्विखानल ३० लवेवाब्युद्धृतादृग्भवेत्॥४॥ द्रष्टावर्जितदृश्यकस्यैकादिभेएकादिराशिषुखे
काग्नीत्यादयोङ्काः स्युः। तत्रैकभेऽङ्कः खंशून्यम्। द्विभेएकः। त्रिभेअग्नयस्त्रयः। चतुर्भे द्वौ। पञ्चभे खम्। षड्भे वेदाः
चत्वारः। सप्तभेरामाः त्रयः। अष्टभेयमौ द्वौ। नवभेभूः एकः। दशभेखम्। एकादशभे अभ्रंशून्यम्। द्वादशभेअभ्रंशू
न्यम्। खाभ्राभ्रमित्यत्रसमाहारैकवद्भावः। पश्यतीतिद्रष्टा। तेन द्रष्ट्रा दर्शनार्हो दृश्यः। दृश्यएवदृश्यकः। द्रष्टा
वर्जितदृश्यकस्यैकादिभेएतेऽङ्काःस्युः एकादिभइत्युक्ते किमेतेराश्यादौराशिमध्येराश्यन्तेवाङ्काःस्युरितिसंशयः

प्रो.म.
१८

स्यात्तन्निरासार्थमाह। आदिजादिति। द्वितीयादिराश्यादिजाद्इत्यादिबोध्यम्। गुर्वादीनां विशेषमाह। चेदिति। चेद्गुरु
णाद्रष्टावर्जितदृश्यकस्य अष्टवेदे भे अष्टभे चतुर्भे च कृता श्चत्वारोऽङ्काः स्युर्न तदा पूर्वोक्त इत्यध्याहारः। मन्देन शनैश्च
रेण द्रष्टावर्जितदृश्यस्याङ्कः पञ्चमे भे नवभे द्विभे च कृताश्चत्वारोऽङ्काः स्युर्न तु पूर्वोक्ताः। असृजा भौमेन द्रष्टावर्जितदृ
श्यस्य नगगुणे भे सप्तभे त्रिभे च कृताश्चत्वारोऽङ्काः स्युर्न पूर्वोक्ताः। एवं राश्यादावङ्कानुक्त्वा राश्यधः स्थांशानामङ्क
साधनं विशेषणद्वारेणाह। किंविशिष्टा अङ्काः। भागघ्नस्य पदद्विस्थानललवेन संस्कृताः। एतदुक्तं भवति। रा
श्यादिजो योऽङ्कः सोऽग्निमाङ्काश्चेच्चतुष्टुस्तदा वृद्धिर्यदाऽग्निमाङ्को राश्यादिजाङ्काच्चतुष्टुस्तदाग्रे स्यादस्तीति वेदितव्य
म्। तेन स्थेयेन वृद्ध्या वा गुणिता ये राश्यधःस्था भागास्ते त्रिंशता भाज्याः। लब्धेन तेऽङ्काः संस्कार्याः। कथम्। स्थेयहीना
वृद्धौ युक्ता इति। ततोऽङ्कस्तु द्वितीयश्चतुर्भक्ताः सन्तो दृग्भवेत्। अत्रेदमवधेयम्। गुरुणा द्रष्टावर्जितदृश्यस्य पञ्च
मराशौ नवमराशौ च राश्यादिजोऽङ्कः पूर्वोक्तो द्विमितो न ग्राह्यः किन्तु चत्वारः। एषां क्रमशः मूर्न्येकाभ्यां सहान्तरं वि
धायोक्तदिशा दृष्टिः साध्या यदा तु गुरुणा द्रष्टावर्जितदृश्यस्य त्रिमितं शेषं तदा राश्यादिजोऽङ्कस्त्रिमितो ग्राह्योऽन्तरं च रामः
तुर्भिः सार्कं कार्यं न द्वाभ्यामिति। एवं सप्तमिते शेषेऽङ्कस्त्रिमितो ग्राह्योऽन्तरं चतुर्भिः सह विधेयं न द्वाभ्यामिति। एवं श १८

निर्भौमयोरपिबोध्यम्। एवं द्वादशभावानामप्युपरिभावान् दृश्यान् ग्रहान्दृष्ट्वा कल्प्य ग्रहाणां दृष्टोऽनेनैव प्रकारे-
ण साध्याः। अत्रोपपत्तिः। बृहज्जातके। त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः॥ रविजा-
मरेज्यरुधिराः परे च ये क्रमशो भवन्ति खलु वीक्षणेऽधिकाः इति। परे रविचन्द्रबुधशुक्राश्चकाराद्रविजादीनां समु-
च्चयस्ततः परे चेत्यस्य समस्तादित्यर्थः। परे चेत्युपादानं तु क्रमप्रतिपादनार्थं वीक्षणेऽधिका इति वाक्यखण्डस्य
संपूर्णदृष्ट्याद्रष्टार इत्यर्थं प्रकटयितुं च। तृतीयदशमं शनिर्नवमपञ्चमं गुरुश्चतुर्थाष्टमं भौमः सप्तमं सर्वे संपूर्ण-
दृष्ट्या पश्यन्ति। तृतीये। आदौ मध्येऽन्ते च सर्वत्र पादमिता दृष्टिर्नोचिता। कुत्रचिदेकत्रोचिता। तद्यावति मेषवृषा-
दिभागेऽवस्थितस्य ग्रहस्य तृतीये तावत्येव भागे स्थिते ग्रहे द्विराश्यन्तर उत्सर्गसिद्धसाम्यलक्षणयुक्तेः सत्वात्तृ-
तीयस्य मेषवृषादिसंज्ञव्यावहारिकराशेरवश्यंभावाच्च पादमिता दृष्टिर्न्याय्या। तथा नवराश्यन्तरेऽपि। एवं दृग्ग्र-
हाच्चतुरष्टराश्यन्तरे द्विपादमिता दृष्टिः। त्रिसप्तभान्तरे त्रिपादमिता दृष्टिः। षड्भान्तरे संपूर्णा चतुःपादमिता दृष्टिः।
शेषेषु दशराश्यन्तरादिषु अनुक्तत्वाद्दृष्ट्यभाव इति सिद्धम्। एवं द्वादशैकादिरा-
श्यन्तरे दृश्ये सतीति सिद्धा दृष्टिपादा लिख्यन्ते। अत उपपन्नं खैकाग्निद्विखवेदरा-

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ० | १ | ३ | २ | ० | ४ | ३ | २ | १ | ० | ० | ० |

मयमभूखेभ्योऽमेषादिभ इति। अथ दृक्साधनोपपत्तिः। द्रष्टुपेक्ष्याद्ग्रहः कियतान्तरेणाग्रतोऽस्तीति ज्ञानार्थं
१९ ग्रहयोर्द्रष्टुवर्जितः क्रियते। द्रष्टुवर्जितदृश्यस्य यावत्संख्यो राशिस्तदधो योऽङ्कः स ग्राह्यः। ततो राश्यर्धस्थांशानां
दृक्साधनायानुपातः। यदि त्रिंशदंशे गते ष्याङ्कान्तरतुल्या वृद्धिः क्षयो वा लभ्यते तदा शेषांशैः किमिति। क्षयवृद्धि
गुणिता भागास्त्रिंशता भाज्याः फलेन गताङ्कः क्षये हीनो वृद्धौ युक्तः कार्यः॥ अतः सूक्ष्मत्वं भागघ्नक्षयवृद्धिखानल
लब्धेन संस्कृता इति। एवं रूपचरणात्मिका दृष्टिर्भवति। चतुर्भिश्चरणै रूपमिति चतुर्भक्ता रूपादिका स्यात् इत्यु
पपन्नम्। अथ विशेषदृगुपपत्तिः। गुरोश्चतुरष्टराश्यन्तरे शनेर्द्विनवराश्यन्तरे कुजस्य त्रिसप्तराश्यन्तरे संपूर्णा चर
णात्मिका दृष्टिरतस्तद्राश्यन्तरे तेषामङ्कश्चत्वारो न्यास्य इत्युपपन्नम्। प्रोक्तराश्यधिकान्तरे तु संपूर्णदृष्टेरपच
यादग्निमाङ्केन सहान्तरं कृत्वा दृष्टिः साध्येत्यपि युक्तम्। अथ गुरोस्त्रिसप्तान्तरे त्रिपादमिता दृष्टिश्चतुरष्टभान्तरे च
तुः पादमिता मध्ये तु पादत्रयाधिका पादचतुष्टयादूना दृष्टिरुचिता। अतश्चतुर्भिः साकमन्तरं कार्यं न द्वाभ्यामेवं शनि
भौमयोरपीति सर्वं निरवद्यम्। एतद्दृष्टिसाधनमतिलघुक्रियया प्रोक्तं पराशरहोरायाम्। दृश्याद्विशोध्य द्रष्टारं षड्राशि रामः
भ्योऽधिकं भवेत्॥ दिग्भ्यो विशोध्य द्वाभ्यां तु भागीकृत्य च दृश्यः॥ १॥ पञ्चाधिके विना राशिं भागाद्विघ्नाश्च दृश्यः। वेदा १९

धिके त्यजेद्दूताद्भागाद्दृष्टिस्त्रिभाधिके ॥ २॥ विशोध्य युगतो द्वाभ्यां लब्धं खाग्नियुतं भवेत्। कराधिके विनाराशिं भागा
स्तिथियुतास्तथा ॥ ३॥ रूपाधिके विनाराशिं भागा द्वाभ्यां विभाजिता इति॥ अत्र विशेषदृक्साधनार्थं श्लोकाः॥ भागा
द्विनिघ्ना विधुभेन्तराले त्रिंशद्युतांशा गजभे कजस्य। दृष्टिर्भवेद्व्यंगदलोनषष्टिर्द्विभेद्रु· भेद्विघ्नलवोनषष्टिः॥ १॥ त्रिभे
द्विभे शार्द्धयुतेषुवेदाः पश्येत जीवेन विहीनदृश्ये। द्विघ्नांशकोना युगभे तु षष्टिः सार्द्धांशकोना गजभेपि षष्टिः॥ २॥
त्रिभेऽद्रिभे भागविहीनषष्टिर्दृष्टिः प्रणीता धरणीसुतस्य। पञ्चाववनीसंयुतसार्द्धभागाद्विभेद्र· भे षष्टिकलोन्मिते व
॥ ३॥ स्पष्टार्थाः सर्वेपि· परमनेन प्रकारेण षष्ट्यंशात्मिका दृष्टिः स्यात्षष्टिभक्ता सती रूपादिका स्यादिति बोद्धव्यम्।
वासनात्र श्रीपतिकृतदृष्टिसाधनवासनावज्ज्ञेया स्पष्टत्वाद्ग्रन्थबाहुल्यभयाच्च न मया लिख्यते॥ यत्तु केनचित्प्र
लपितं बृहज्जातके वीक्षणेऽधिकाद्युक्तेः रविजादीनां त्रिदशादिस्थाने अन्यग्रहापेक्षया वीक्षणे आधिक्यमात्रं
न तु संपूर्णत्वं· तथा सति पद्धत्युक्तं विशेषदृगानयनमसङ्गतमार्षग्रन्थानुक्तत्वादिति तच्चिन्त्यम्। पराशरज्जा
तके विशेषदृगानयनस्योक्तत्वात्। तथा च पराशरवाक्यम्। शरवेदाः खरामाश्च तिथयो योजिताः क्रमात्। शनिदे
वेज्यभौमानामेवं दृष्टिः स्फुटा भवेत्॥ सारावल्यामपि। पूर्णं पश्यति रविजस्तृतीयदशमे इत्यादि। बृहज्जातकटीका

ग्रामुत्पलं यस्मिन्स्थाने चेद्दशं तृतीयदशमस्थितान्ग्रहराशीन्स्थानेश्वरः पश्यन्नन्यग्रहेभ्योधिकफलप्रदो भवति परिपू
र्णपश्यतीत्यर्थ इति। तस्माद्विशेषदृक्साधनमार्षमूलकमिति सर्वमवदातम्॥ ॥ सवासनायां समकारि वृत्तिर्दिवा
करेणामलकेशवोक्तेः॥ पितृव्यसंप्राप्तधिया खगानां दृक्साधनं तत्र समाप्तिमागात्॥२॥ इति श्रीकृष्णदैवज्ञात्म
जनृसिंहगणकस्य सुतेन दिवाकरेण विरचितायां केशवोक्तजातककर्मपद्धतिटीकायां सवासनायां प्रौढमनोरमा
भिधायां दृष्टिसाधनाध्यायो द्वितीयः॥२॥ श्रीमच्छिवाख्यस्य मतानुसारं प्राचां कृतिभ्यः परिगृह्य सारम्॥ खेचारिवीर्या
नयनाधिकारं दिवाकराख्यो विवरीवरीति ॥१॥ अथ बलसाधनाध्यायो व्यारभ्यते। तत्र बलं द्विविधं ग्रहबलं
भावबलं चेति। आद्यं स्थानदिक्कालनिसर्गचेष्टादृग्भेदैः षड्विधम्। तत्रापि स्थानबलं पञ्चधा दिग्बलमेकधा काल
बलं चतुर्धा निसर्गबलमेकधा चेष्टाबलं त्रिधा दृग्बलमेकधैव। एवं पञ्चदशधा ग्रहबलम्। द्वितीयं त्रिविधं स्वा
मिबलदिग्बलदृग्बलभेदात्। तत्र तावद्ग्रहबलं विवक्षुः स्थानबलभेदेषूच्चबलमाह॥ ॥ नीचोनो भगणाच्च्यु
तः षडधिकश्चेत्खगृहदोरुच्चबलम्॥ ॥ नीचेनोनोऽधो ग्रहश्चेत्षडधिकस्तर्हि भगणाद्द्वादशराशिभ्यः च्युतः शु रामः
द्धः चेत्तद्ग्राह्यत्वस्तदा यथास्थित एवेत्यर्थतः सिद्धम्। ततः षड्हृत्तद्भुक्तः सन् उच्चसंबन्धि औच्चं बलम्। उच्चबलं २०

रूपादिकं स्यादित्यर्थः। अत्रायमभिसंधिः। यदि नीचोनग्रहस्य संपूर्णाः षड्राशयः स्युस्तदा ते षड्भक्ताः पूर्णरूपमितं बलं स्यात्। यदि षडल्पास्तदा प्रथमरूपस्थाने शून्यं ग्राह्यम्। तद्राश्याद्यं षष्ट्या गुण्यं ततो विकलास्थानात्प्रतीपं स्वस्वहारेण लब्धमुपर्युपरि संयोज्य यदूर्ध्वस्थाने भवति तत्पुनः षड्भिर्भाज्यम्। लब्धं शून्याधः षष्ट्यंशाज्ञेयाः। शेषं राश्यादिस्थानीयं पुनः षष्ट्या संगुण्य प्राग्वत्कृते यदूर्ध्वस्थाने निष्पद्यते तदपि षड्भिर्भाज्यं, लब्धं तदधो विषष्ट्यंशाः एवं त्रिखंडरूपाद्युच्चबलं भवति। यद्वा प्रथमं रूपस्थाने शून्यं ग्राह्यं ततो राशीन्षष्ट्या संगुण्य तत्र द्विगुणानंशान्संयोज्य षड्भिर्भागे हृते लब्धं षष्ट्यंशाः स्युः। पुनर्यच्छेषं तत्षष्ट्या संगुण्य तत्र द्विगुणाः कलाः प्रक्षिप्य षड्भिर्भक्ते विषष्ट्यंशाः स्युरेवमग्रेपि। यद्वा। नीचग्रहान्तरस्य षड्भाल्पस्य राश्यंशः षष्ट्यंशाद्युच्चबलं स्यात्। तत्षष्टिभक्तं रूपादिकमपि स्यादिति सुगमप्रकारोयम्। उच्चनीचविभागः सारावल्याम्। सूर्यादीनामुच्चाः क्रियवृषमृगयुवतिकर्कमीनतुलाः॥ स्वोच्चे तु कथ्यभागा यथाक्रमेणैव परमोच्चाः॥१॥ दिग्वह्न्यष्टाविंशतितिथिबाणत्रिघनविंशतयः॥ स्वोच्चात्सप्तमराशिर्नीचः स्याद्दशकैः परमः॥२॥ अथोपपत्तिः॥ ॥ सारावलीवाक्यम्। स्वोच्चे स्थितः शुभफलं प्रकरोति पूर्णं नीचस्थितस्तु विफलत्वमिति। अत्रोच्चस्थे ग्रहे फलपरमत्वाद्बलं परमं रूपमितं। तत्र नीचग्रहान्तरमपि परमं षड्राशि

ग्रै॰म॰ २१ तुल्यं स तो नीचं ग्रावद् उपचयः नीचे फलाभावाद्बलाभावः तत्र नीचग्रहान्तराभावश्च ततउच्चं यावदुपचयः।
नीचग्रहान्तरतएवोच्चबलं साधयितुं युज्यते। अथानुपातः। यदि षड्राशितुल्येन नीचग्रहान्तरेण रूपं बलं तदेष्टेन
किमिति फलमुच्चबलं स्यात्। अतः सम्यगुक्तं नीचोनः षड्भहृदिति। परमत्रोच्चाद्ग्रस्ये ग्रहे ग्रहेणोनं नीचं कार्यं नी
चाद्ग्रस्ये नीचोनो ग्रह इति। अत्राचार्यैः सर्वदा नीचेनैवोनो ग्रहः कर्तव्य इत्युक्तं तथाकृते उच्चाद्ग्रस्ये ग्रहे नीचग्र
हान्तरमुपचीयते। बलं त्व पचीयते। उपचीयमानादन्तरादपचीयमानं बलं साधयितुं न युज्यत इति भगणाच्चु
तं इत्युक्तम्। भगणाच्छोधिते नीचाद्वा चीनराश्यादि शिष्यते। एतच्च उच्चाद्ग्रस्ये प्रतिदिनमपचीयत इत्यस्मादप
चीयमानं बलं साध्यमिति युक्तम्। अथ षष्ट्यंशग्रहणोपपत्तिः प्रथमं रूपस्थाने शून्ये गृहीते सत्यनन्तरं रूपस्य
षष्ट्यंशा ग्राह्याः। तत्र षष्ट्यंशानां षष्ट्या रूपमिति शेषं षष्टिगुणं कृत्वा षड्भक्ते षष्ट्यंशाः स्युरिति युक्तम्। एवं विषष्ट्यं
शषष्ट्या षष्ट्यंश इति शेषं पुनः षष्ट्या संगुण्य षड्भिर्भक्ते विषष्ट्यंशाः स्युरित्यपि साधु। अथ द्वितीयप्रकारवासना
प्रथमप्रकारान्तर्भूतोदाहरणमुररीकृत्योच्यते तत्र नीचोनो ग्रहो राश्यादिः॥०॥१६।२६।२६। असौ षड्भक्तो लब्धं राम:
रूपस्थाने शून्यं शेषं षष्टिगुणितमिदम्। ३।२।२६।२६।०। अत्र राशिस्थाने षष्टिगुणराशिद्विगुणांशयोगः। अंशा २१

स्थाने कलाः। कलास्थाने विकला इति जातम्। एतत्सद्वृत्तं कार्यम्। अतो राशीन्षष्ट्या संगुण्य तत्र द्विगुणाननंशान्प्रक्षि-
प्य षड्भिर्भक्ते लब्धं षष्ट्यंशाः स्युरिति सम्यगुक्तम्। पुनः शेषं २।२६।४० षष्टिगुणम् १७२।२६। ।०। इह राशिस्थाने षष्टि-
घ्नशेषद्विघ्नकलायोगांशस्थाने विकलाः। इदं षड्भिर्भाज्यम्। अतः सुष्ठूक्तं द्विगुणाः कलाः संयोज्येत्यादि। एवमग्रे-
पि द्रष्टव्यम्। अथोच्चबलस्य द्वितीयप्रकारे युक्तिः। षड्राशितुल्ये नीचग्रहान्तरे बलं परममिति प्रागुक्तं तत्र षड्रा-
श्यंशाः १८० अत्र त्रैराशिकम्। यदि स्वाष्टेन्दुमितैर्नीचग्रहान्तरभागैः षष्टिषष्ट्यंशा लभ्यास्तदेष्टैः किमित्यत्र गुण-
हरौ गुणेनापवर्त्य प्राप्तं हरस्थाने त्रयम्। अत उपपन्नं नीचग्रहान्तरस्य षड्राश्यंशास्त्र्यंशाः षष्ट्यंशा उच्चबलमिति।
तथा च पराशरहोरायाम्। नीचोनं तु ग्रहं भार्द्धाधिकं चक्राद्विशोधयेत्॥ भागीकृत्य त्रिभिर्भक्तं फलमुच्चबलं भवे-
दिति॥ इदानीं सप्तवर्गजबलमाह॥ ॥ स्वर्क्षेऽर्द्धं समभेऽष्टमस्त्रिचरणा मूलत्रिकोणे बलम्। मित्रर्क्षेऽङ्-
घ्रिरधीष्टभे त्रयद्र्भांशा वैरिभे षष्ट्यंशकोऽन्तोंशोऽध्यरिभे ग्रहादिषु वशात्तद्वत्स्वसप्तैक्यजम्॥ ५॥ अ-
त्रायं गुरुसंप्रदायः। प्रथमं शत्रू मन्दसितावित्यादिना निसर्गमित्रामित्रसमचक्रं लेख्यम्। ततोऽन्योन्यस्य धनव्य-
यायसहजव्यापारबन्धुस्थिता इत्यनेन तात्कालिकमित्रामित्रचक्रं लेख्यम्। ततोऽधिसुहृन्मित्रादिभिः कल्पये-

इति अधिमित्रादि चक्रं चलेख्यम्। ततः सप्तवर्गजबलज्ञानार्थं सप्तवर्गचक्रमधिमित्रमित्रस्वसमवैर्यधिवैर्युप
लक्षितसप्तवर्गेशान्वितं लेख्यमिति। अथ व्याख्या। स्वस्य क्षेत्रे राशावर्थाद्गृहे सति अर्द्धं बलं स्यात्, समराशिस्थेऽष्ट
मांशो बलं, मूलत्रिकोणराशिस्थे त्रयश्चरणाः, मित्रराशिस्थे चतुर्थांशः, अधिमित्रभस्थे त्रयोऽष्टमांशाः; शत्रुराशिस्थे
षोडशांशः; अधिशत्रुराशिस्थे द्वात्रिंशदंशो बलं स्यादिति सर्वत्र संबन्धः। अर्द्धाष्टमांशादिरूपस्येत्यर्थसिद्धम्। अ
त्र सर्वत्र राशिपदं होराद्युपलक्षकं तेनायमर्थः संपन्नः। स्वराशिस्थे स्वहोरादिस्थे वा ग्रहे रूपार्द्धं बलं स्यादेवमि
तरत्रापि। इदमत्रावगन्तव्यम्। ग्रहो यदा स्वमूलत्रिकोणराशेर्होराद्यवस्थितो भवति तदा चरणत्रयं बलं न ग्रा
ह्यं किंतु मूलत्रिकोण राशेर्योऽधिपतिः सोऽधिमित्रादिर्भवति तदुक्तं बलं ग्राह्यं ग्रहादिपदवशादित्युक्तत्वात्।
यद्वा विशेषेण मूलत्रिकोणग्रहणं कृतं ततः केवलं गृह एव मूलत्रिकोणान्वयो न होरादिष्विति। तथोक्तं श्रीधरा
चार्यैः। स्वगृहादिगतानां यद्ग्रहाणामुदितं बलम्। तदेव सप्तवर्गेऽपि तदीशस्य वशाद्भवेदिति। तदीशस्य होरादिस्वा
मिनः। स्वाधिमित्रत्वादिवशात्स्वगृहादिगतानामेव यद्बलमुक्तं तदेव गृहस्योक्तत्वाद्गृहातिरिक्तसप्तवर्गे बलं भव
ति। अत्र स्वगृहादीत्युक्तत्वाद्धोरादिषु न त्रिकोणान्वय इति सिद्धम्। मूलत्रिकोणानि बृहज्जातके। सिंहो वृषः प्रथमष

ष्ठहयाङ्कतौलिकुम्भास्त्रिकोणभवनानिभवन्तिसूर्यादिति।स्वोच्चत्रिकोणस्वगृहाणांत्रयाणांद्वयोर्वासांकर्यमवस्था
सारावल्याम्।विंशतिरंशाःसिंहेत्रिकोणमपरेस्वभवनमर्कस्य॥उच्चंभागत्रितयंवृषइन्दोःस्यात्त्रिकोणमपरेंशाः
॥१॥द्वादशभागामेषेत्रिकोणमपरेस्वभंतुभौमस्य॥उच्चमथोकन्यायांबुधस्यतुङ्गांशकैःसदाचिन्त्यम्॥२॥परत
स्त्रिकोणजातंपञ्चभिरंशैःस्वराशिजंपरतः॥दशभिर्भागैर्जीवस्यत्रिकोणंधनुषितत्परंस्वगृहम्॥३॥शुक्रस्यचति
थ्यंशास्त्रिकोणमपरंस्वभंतुलायांतु॥कुम्भेत्रिकोणस्वगृहेरविजस्यरवेर्यथासिंहेइति।मूहूर्त्तदर्पणेपि।सिंहे
र्विंशतिरादितोगविपरेसर्वेंशकास्तुङ्गतोमेषेद्वादशपञ्चयोषितिपरेतुङ्गाद्द्वयाङ्केदश॥जूकेपञ्चदशाऽश्वद
घटेद्मेमूलत्रिकोणाह्वयाःसूर्यादेःक्रमशोग्रहस्यकथिताःशेषाःस्वराश्यंशकाः॥१॥गुणाकरस्तुसूर्यस्यजीवभृ
गुभानुभुवांनखांशैर्मूलत्रिकोणभवनमितिशास्त्रविरुद्धंब्रुवन्स्वाज्ञानमेवाविष्कार।तस्मात्सारावलीवाक्यानां
प्रामाणिकत्वाद्वृद्धोत्पलेनापिबृहज्जातकटीकायामुदाहृतत्वाच्चतेभ्यएवनिर्णयःकार्यः।गुणाकरस्यतुद्रेष्काण
बलत्वंस्वात्राप्ययथार्थाभिधायित्वात्तदुक्तमप्रमाणमेवेतिमन्तव्यम्।अत्रोच्चबलस्यपृथगेवानीतत्वादुच्चस्यानपेक्षि
तत्वान्मूलत्रिकोणस्वगृहनिर्णयस्यैवापेक्षितत्वाच्चसंपूर्णएववृषराशिरिन्दोस्त्रिकोणम्।किंचचन्द्रस्यवृषराशौ

प्रधानमेकं मूलत्रिकोणबलमेव ग्राह्यं न तु मित्रादिसंबन्धवशादन्यदपीति बोध्यम्। बुधस्य तु कन्यायां ति। १।
त्यंशास्त्रिकोणम्। परे दशांशाः स्वगृहम्। यत्र तूच्चत्रिकोणस्वगृहाणां त्रयाणामप्यपेक्षा तत्र स्वोच्चे रूपमित्यादि
यथोक्तैव व्यवस्था॥ ॥ एवं स्वादिभादिगतानां ग्रहाणां बलमुक्त्वेदानीं सप्तसु वर्गेषु तत्स्थापनमथ च तदैक्ये
सप्तवर्गजबलं भवतीत्याह। गृहादिपवशादित्यादिना। खेटस्य गृहादिपवशाद्गृहमादिर्येषां ते गृहादयः आ
दिशब्देन होराद्रेष्काणादीनां संग्रहः। गृहादीन् पान्तीति गृहादिपाः गृहादिसप्तवर्गस्वामिनस्तेषां वशात्स्वर्क्षेऽधिमि
त्रादीनि सप्तवर्गबलानि ग्राह्याणि। तेषां सप्तानामैक्याज्ज्ञायते तत्तथा। एवंविधं बलं सप्तवर्गजबलं स्यादित्य
र्थः। एतदुक्तं भवति। यस्य ग्रहस्य सप्तवर्गजबलं ज्ञातुमिष्टं तस्य गृहादिस्वामी स्वाधिमित्रादिषु यद्भवति तदुक्तं
बलं ग्राह्यमिति। अत्र कश्चिदेवं व्याचष्टे। ग्रहो यस्मिन् गृहे होरादौ वास्ति तद्गृहस्वामी होरादिस्वामी वा चेन्मूलत्रि
कोणेऽस्ति तदा त्रिचरणं बलं स्वगृहे चेद्रूपार्द्धमित्यादि। तन्न श्रद्धेयम्। निखिलजातकशास्त्रविरोधात्। किं चात्र गृ
हादिपवशादित्युक्ते भ्रान्तिरपि संभवति। परं प्राचीनग्रन्थे केनापि तथा नोक्तमिति भ्रान्त्यनवकाशादिति मिश्रा ऊ
चुः। तथा च सारावलीवाक्यम्। स्वोच्चे स्थितः शुभफलं प्रकरोति पूर्णं नीचार्कगस्तु विफलं रिपुमन्दिरेऽल्पम्। पादं फ

लस्यहितभेस्वगृहे तथार्द्धपादत्रयं गगनगः स्थितवांस्त्रिकोण इति। अत्र स्वोच्चादिस्थानेषु स्थितवान् गगनगो ग्रहः
संपूर्णादिशुभं फलं ददातीत्युक्तं परं स्वोच्चादिषु स्थितो ग्रहस्वामी संपूर्णादि फलं ददातीति नोक्तमेव तस्माद् गृहादि
स्वामिनि स्वभस्थे रूपार्द्धबलमित्यादिव्याख्या मम सदेवेति प्रतीमः। पराशरजातकेपि। मूलत्रिकोणस्वर्क्षाधिमि
त्रमित्रसमारिषु॥ अधिशत्रुगृहे चापि स्थितानां क्रमशो बलमिति। अत्रापि मूलत्रिकोणादिस्थितानां वर्गेशानां बलं
स्यादिति नाभिहितमेव। पुनर्भवेदेवम्। त्रिकोणादौ स्वोच्चे चोभयत्रापि गगनगपदस्य संबन्धाद्विनिगमनाविरहा
दुच्चबलमपि यदि नीचगृहस्वामिग्रहान्तरतः साधितं स्यात् उच्चबलं तथा न साधितमतः केनचित्परविश्वासा
य व्याख्यातं तन्न सुधीभिरादरणीयम्। यत्तु केशवसांवत्सरैः स्वकृतटीकायामुक्तं ग्रहो यस्मिन् गृहेस्ति तद्गृहस्वा
मितः स्वर्क्षाद्युक्तबलं ग्राह्यमिति। तदपि सर्वप्राचीनग्रन्थाविरोधायान्यथा व्याक्रियते। ग्रहो यस्मिन् गृहेस्ति तद्गृ
हस्वामी चेत्स्वयमेव तदा रूपार्द्धबलं यद्यधिसुहृत्तदात्र यद्भांशादित्यादि एवं होरादावपि॥ ॥ अथोपपत्तिः॥
रत्नजातके। स्वोच्चत्रिकोण स्वसुहृच्छत्रुनीचगृहार्कगैः॥ शुभं संपूर्णपादोनदलपादाल्पनिष्फलमिति॥
एवं फलतारतम्यनिर्देशात्फलसदृशगेनैव स्वोच्चादिग्रहबलेन भवितव्यमतः स्वोच्चे रूपं मूलत्रिकोणे त्रिचरणं

गी·म· स्वगृहेर्द्धपादोमित्रगृहेरिपुगृहेत्स्वंनोचेफलाभावः द्वलाभावइतिसिद्धम्।एवंतारतम्यवशाद्वशिष्टाधिमित्र
२४ समशत्रुगृहाधिशत्रुगृहेषुफलंबलंचन्याय्यम्।तत्रादावधिमित्रगृहेसाध्यते।अधिमित्रगृहेस्वगृहापेक्षयान्यून
तामित्रगृहापेक्षयाधिक्यमितिप्रसिद्धम्।अतःस्वगृहाद्यावतीन्यूनतातावत्येवमित्रगृहादधिकतेतिन्यूनत्वाधि
कत्वमर्द्धंव्यवस्थितम्।ततःस्वगृहमित्रगृहबलयोरन्तरार्द्धेऽस्मिन् ७।३० स्वगृहबलाद्धीनेमित्रगृहबलेवायो
जितेऽधिमित्रगृहबलंजातमिदम्। २२।३०।अनेनार्द्धाधिकंमित्रमधिमित्रमित्यधिमित्रशब्दस्यमुख्यार्थोपिव्यक्ती
भूतइत्याहुःप्राञ्चः।तद्यथा।अधिमित्रेमित्रापेक्षयाऽर्द्धमित्रताऽधिका।एवमधिमित्रशब्दोपम्यादधिशत्रौशत्रोर
पेक्षयार्द्धशत्रुताऽधिका।अथसमगृहे।तत्रसमशब्दार्थोद्विधा अर्द्धमित्रमर्द्धशत्रुरित्येकः।नमित्रंनशत्रुश्चेतिद्विती
यः।ततःशत्रुगृहेदशबलमित्युक्तेद्विगुणशत्रुगृहेऽर्थाद्यथापञ्चबलंप्राप्यतेतथाऽर्द्धशत्रोरपेक्षयाशत्रोर्द्विगुणत्व
मितिसमेऽर्द्धशत्रुतासत्वाच्छत्रुगृहबलाद्द्विगुणम्।अर्द्धमित्रतासत्वान्मित्रगृहबलस्यार्द्धंयथास्यात्तथासमगृहब
लंन्याय्यमतोमित्रगृहबलार्द्धं ७। ३० जातंसमगृहबलम्।एतदेवशत्रुगृहबलाद्द्विगुणमित्यंस्यार्द्धं ३।४५ शत्रुगे राम:
हबलमपिसिद्धम्।समोनमित्रंनशत्रुरितिसमान्मित्रतोऽपचयेमित्रगृहबलेमित्रतानिबन्धनंसमगृहबलाद्यवद २४

त्वं तावदेवान्तरमपचीयमानमेवं शत्रुतानिबन्धनं शत्रुग्रहबले वाच्यमितियुक्त्या शून्यं बलमत्रायाति। एतत्तु बा
धितम्। रिपुमन्दिरेऽल्पमित्यल्पफलोपम्येनात्राल्पबलस्यावश्यकत्वान्नीचएवफलाभावस्योपपादितत्वाच्च। अथा
धिशत्रुगृहे समे शत्रुत्वमित्रत्वाभावात्ततः शत्रुतोऽपचयेन शत्रुगृहबले शत्रुतानिबन्धनः समगृहबलाद्यावान्ह्रा
सस्तावानधिशत्रोरपेक्षया शत्रोरर्द्धशत्रुताधिक्यान्निजार्द्धसहितः ५।३७।३० समगृहबलादूनः ७।३० सन्नधिशत्रु
गृहबलं जातम्। १। ५२। ३०। अत्र शत्रुगृहबलस्य समगृहबले नैव सिद्धत्वादधिशत्रुगृहबलस्यापि समगृहबलाधी
नेयमेव सिद्धिर्न्याय्या नान्या। एवं गृहबलमुपपन्नम्। अथ स्वाधिमित्रादिहोरादावपि स्वाधिमित्रादिसंबन्धसाधार
ण्यात्स्वाधिमित्रादिगृहबलमेव बलं युक्तम्। वर्गे स्वाधिमित्रमित्रादीनां पतीनामुपात्तत्वाद्गृहादिपवशादिति सिद्धम्।
बृहज्जातके स्वत्रिकोणनवांशैः। स्वस्य त्रिकोणं च नवांशश्च तैरित्यर्थः। पश्चात्स्वपदेनाधिमित्राद्योनवांशपदेन होरा
द्यप्यलक्षिताः॥ इति सप्तवर्गबलोपपत्तिः सुन्दरमिश्रोदिता॥ अथ युग्मायुग्मराशिनवांशबलमाह॥ ॥ शुक्रेन्दू
समभांशके हि विषमेऽन्येदद्युरङ्घ्रिं बलम् ॥ ॥ समभांशके स्त्रीराशिनवांशके स्थितौ शुक्रेन्दू हीति नि
श्चयेनाङ्घ्रिं रूपचतुर्थांशं बलं दद्याताम्। भं चांशकश्च भांशकमित्यत्र द्वन्द्वैकवद्भावः। समं च तद्भांशकं च समभांश

गौ॰म॰ कं तस्मिन्। अयमर्थः। स्त्रीराशौ स्त्रीराशेर्नवांशे वा यदि शुक्रेन्दू भवतस्तदा रूपचतुर्थांशो बलं यदा तु स्त्रीराशौ स्त्रीरा
२५ शेर्नवांशे चोभयोः स्थितौ भवतस्तदा पादद्वयं बलमित्यर्थः समाजमहिम्नैषोपलभ्यम्। अन्ये सूर्यभौमबुधगुरुशन
यः विषमे भांशके पुंराशिनवांशे अङ्घ्रिं बलं दधुः। पुरुषराशौ पुरुषराशिनवांशे वा स्थिताः सूर्याद्यः पादबलं दधुः।
यदा तु पुंराशौ पुंराशिनवांशे च स्थिता भवन्ति तदा पादद्वयमित्यर्थः। अत्र विषमपदस्य पुमर्थोपलक्षकत्वं स
मपदस्य च स्त्र्यर्थोपलक्षकत्वमतो वृषस्य द्वितीयनवांशे स्थितस्य सूर्याद्यन्यतमस्य द्वितीयनवांशस्य युग्मत्वा
त्पादबलं न स्यादिति भ्रमो निरस्तः। अत्र द्वितीयनवांशः कुम्भस्येत्यस्य पुंभात्मकत्वमेव। अत्रोपपत्तिः। स्त्रीराशिषु
स्त्रीग्रहाणां पुरुषराशिषु पुरुषग्रहाणां बलाधिक्यं प्रसिद्धम्। तथा चात्र मेषाद्याः पुंस्त्रीक्रूराक्रूरचरस्थिरद्विस्वभावसं
ज्ञा इत्यादिना समराशीनां स्त्रीत्वं विषमराशीनां पुरुषत्वमुक्तम्। तथा बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युव
ती नराश्च शेषा इति शशिशुक्रयोः स्त्रीग्रहत्वं चातस्तयोः समराश्युपलक्षिते स्त्रीराशौ बलाधिक्यम्। तथैवेतरेषां
पुरुषग्रहाणां विषमराश्युपलक्षिते पुरुषराशौ बलाधिकत्वम्। अत्र शनिबुधयोर्नपुंसकत्वेऽपि पुरुषाकृतित्वात्पुं रामः
ग्रहेष्वन्तर्भावः। तथा च लघुजातके। चन्द्रसितौ स्त्रीक्षेत्रे पुरुषक्षेत्रोपगाः शेषाः। बलिन इति। राशिसमांशस्तेंऽशेऽपि २५

बलंसिद्धम्। किंचात्रद्वाविन्दुशुक्रौयुग्मांशेतिथिरोजांशकाः परइति। पराशरवाक्येपिअंशेबलमुक्तम्। यथासप्तव
र्गबलेग्रहबलंनवांशबलंचस्वतन्त्रंतद्वदत्रापिपुंस्त्रीराशिबलंपुंस्त्रीराशिनवांशबलंचोभयंस्वतन्त्रमेव। अतोयुग्म
राशिगतत्वेसतियुग्मांशगतत्वंविवक्षितम्। तयोरन्यतमेस्थितस्यपादबलंनोत्पद्यतइतिसूर्यज्योतिर्विदांमतंपरास्त
म्। जातकसंग्रहे। मित्रगेहबलद्रेष्काणबलपुंस्त्रीराशिनवांशबलानांफलसाम्यनिर्देशान्मित्रगेहेयद्बलंतद्वेषांत्र
याणामितिविशेषमुक्त्वापादबलंसिद्धम्। यदातुशुक्रेन्दूसमभेसमभांशेचभवतस्तदोभयोरपिस्वतन्त्रत्वात्पादद्वयं
बलंयुक्तमुक्तमितिगुरुचरणाः॥ येपितान्त्रिकाः। समभेसमभांशेवास्थितयोःशुक्रेन्द्वोःपादोबलमुभयत्रापिस्थित
योरपिपादएवबलंनपादद्वयमित्याहुस्तदविचारितरमणीयम्॥ अथकेन्द्रादिबलमाह ॥ ॥ केन्द्राद्येषुचरूप
कार्द्धचरणान्यच्छन्तिखेटाः क्रमात् ॥ ॥ केन्द्रमाद्योयेषांतानिकेन्द्राद्यानिकेन्द्रपणफरापोक्लिमानितेषु
स्थिताःखेटाःक्रमाद्रूपकार्द्धचरणान्बलानियच्छन्तिइति। रूपमेवरूपकंस्वार्थकप्रत्ययः। अर्द्धंरूपार्द्धंचरणोरूप
चतुर्थभागः। क्रमादितिकेन्द्रस्थारूपबलंपणफरस्थारूपार्द्धम् आपोक्लिमस्थाःपादबलंदद्युरित्यर्थः। केन्द्रादिसंज्ञा
रहस्यजातके। कटककेन्द्रचतुष्टयसंज्ञाःसप्तमलग्नचतुर्थखभानाम्। केन्द्रात्परंपणफरंपरतश्चसर्वमापोक्लिमम्मिति।

प्रौ·म· अत्रकैश्चिद्भावस्वीकारःकृतस्तन्मतंनग्राह्यमितिद्योतनार्थंचकारः।अथोपपत्तिः।भगवान्गार्गिः।केन्द्रस्थःपूर्णबलो
२६ मध्यमबलःपणफरस्थितस्तद्वत्।आपोक्लिमगःप्रोक्तोहीनबलःखेचरोमुनिभिरिति।केन्द्रेस्थितस्यसंपूर्णबलम्।
संपूर्णतारूपात्मिकेतिरूपंबलम्।पणफरस्थस्यमध्यबलंमध्यंत्वर्द्धरूपत्वमवस्थितमित्यर्द्धरूपंबलम्।एवंस
तिपणफरापेक्षयाकेन्द्रस्थस्यद्वैगुण्यमित्यनयैवयुक्त्यापोक्लिमस्थस्यापेक्षयापणफरस्थस्यद्वैगुण्यंसिद्धमतः
पणफरस्थबलार्द्धपादोहीनबलमापोक्लिमस्थस्य।अतःसर्वमुपपन्नम्।अत्ररत्नावलीकारेणभावस्वीकारःकृ
तः।तथाचतद्वाक्यम्।केन्द्रादिप्राप्ताद्युसदोत्रभावफलंतदर्द्धचरणोन्मितंचेति।नचैतद्युक्तंमुनिभिरनुक्तत्वात्।
तथाचपराशरः।केन्द्रादिषुस्थितालग्नात्षष्टिःत्रिंशत्तिथिःक्रमादिति।आचार्येणाप्युक्तम्।अत्रकेचिद्भावफलष-
ष्ट्यंशकल्पनयात्रैराशिकमिच्छन्ति।तदप्ययुक्तमिति।क्वचित्पुस्तकेतदपियुक्तमितिदृश्यतेतल्लेखकदोषात्पति
तमितिबोध्यम्।अतःसूर्यगणेशदामोदरादिभिर्भावस्वीकरणंकृतंतदार्षग्रन्थविरुद्धत्वाद्बुधस्याप्यनुपातेनन
तोन्नतबलसाधनमिवोपेक्षणीयम्।इदानींद्रेष्काणबलमाह॥ ॥स्त्रीखेटौचरमेनराःप्रथमकेक्लीबौच रामः
मध्येतथाद्रेष्काणेवितरन्तिपादम्॥ ॥स्त्रीखेटौचन्द्रशुक्रौयत्रकुत्रापिराशौचरमेतृतीयस्मिन्द्रेष्काणेस्थि २६

तौ पादं बलं दत्तः। नराः सूर्यभौमगुरवः प्रथमके द्रेष्काणे पादं बलं वितरन्ति ददति। क्लीबौ नपुंसकाख्यौ बुधशनी मध्ये द्रेष्काणे पादं बलं ददाते। अत्रोपपत्तिः पराशरः। आदिमध्यावसानेषु द्रेष्काणेषु स्थिताः क्रमात्॥ पुंनपुंसकयोषाख्या दद्युस्त्रिथि बलं ग्रहा इति। सारावल्यामपि। पुंस्त्रीनपुंसकाख्याः क्षेत्रेष्वाद्यन्तमध्यसंप्राप्ताः॥ बलिन इति। अतः केशवश्रीपत्यादिभिराचार्यैर्यदुक्तं तत्समूलमेव। यत्तु होरामकरन्दे। क्षेत्रादिमध्यान्तगतान् योषिन्नपुंसकाख्या बलिनः क्रमेणेति गुणाकरेणोक्तं तदेतिभ्रान्तिविलसितम्। यद्यपि विज्ञानभूत्येन ज्ञानराजसुतेन सूर्येण श्रीपतिपद्धतिटीकायामेतदाचार्यैः केषांचिन्मतमङ्गीकृतम्। यतो दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनसमध्ययातौ। रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालमिति ब्रुवतां वराहादीनामनभिमतमित्यगादि तदप्यसत्। दिनकररुधिराविस्यादिवराहवाक्यस्याष्टवर्गफलविषयत्वात्। उत्पलेनाप्येवमेवोक्तम्। अतो वराहादीनामाशयमजानता सूर्येण यदभिधायि तदयुक्तमिति सिद्धम्॥ अथोपसंहरति॥ ॥ उदितं स्यात्स्थानवीर्यमिदम्॥ ॥ इदं यत्सप्तधा बलमुदितं कथितं तत्स्थानवीर्यं स्यात्। पञ्चानां योगे स्थानबलं स्यादित्यर्थः। अमुमेवार्थं प्रकटयितुं बुशब्दोपादानमत्रेति बोध्यम्। एवं सभेदं स्थानबलमुक्त्वाधुना क्रमप्राप्तं दिग्बलमाह॥

ग्रे॰म॰ ॥ ॥ मन्दाल्लग्नमिनात्कुजाच्च हिबुकं शोध्यं विधोर्भार्गवान्माध्यं ज्ञाद्गुरुतोऽस्तमत्र रसभात्पुष्टं त्यजेच्च
२७ क्रतः ॥ दिग्वीर्यं रसहृत्तु ॥ ॥ स्पष्टम् । तुशब्दोऽत्र भजनविधिरुच्चबलानयने प्रागुक्तः स एवेति ज्ञापनार्थम् ॥
अत्रोपपत्तिः ॥ दिग्बलं नाम यो ग्रहो यस्यां दिशि बलवानुक्तस्तदुत्पन्नं बलम् । एवं ग्रहाणां दिक्संबन्धेन बलोत्कर्षा
पकर्षौ मिहिरागमप्रामाण्यतः सिद्धौ तदुक्तं वराहमिहिराचार्यैः । दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशी
तकरौ चेति । एवं ग्रहाणां दिक्क्रमस्तु राशिचक्र एव कल्पनीयो भवति तथा लग्नचतुर्थसप्तमदशमभावाः सव्यक्र
मेण पूर्वोत्तरपश्चिमयाम्यदिक्स्थानीया इति प्रत्यक्षतो लक्ष्यन्ते । यतः क्रान्तिमण्डलक्षितिजसंपातोपलक्षित
स्य प्राग्लग्नस्य सूर्योदयादितः प्रवृत्तिर्दृष्टा सूर्योदयस्तु प्राच्यामेवेति लग्नस्य पूर्वदिक्स्थानीयत्वम् । तथैव प्र
त्यक्क्षितिजेऽवस्थितस्यास्तलग्नस्य पश्चिमदिक्स्थानीयत्वम् । अथ लग्नास्तोपलक्षितयोः प्रागपरयोर्मध्ये स
म्यद्दक्षिणस्थितयोश्चतुर्थदशमभावयोः क्रमेणोत्तरदक्षिणदिक्स्थानीयत्वम् । तत्र यथोक्तदिशि ग्रहस्य संपू
र्णबलं ततो यथा यथा विप्रकर्षस्तथा तथा बलस्य ह्रासः । परमविप्रकर्षे बलाभावलक्षणः परमो ह्रासो युक्तः । प रामः
रमविप्रकर्षस्तु यथोक्तदिशातः क्रान्तिवृत्तार्द्धे निजनिजसप्तमभावात्मके । अत्रानुपातः । बलाभावलक्षण २७

यथोक्तभावाद्वीगग्रतोपिक्रमेणबलस्योपचयेषड्राशिभिः संपूर्णरूपंबलंभवतीतिग्रहाद्बलाभावलक्षणंभु
वंविशोध्यशेषंषड्राश्यल्पंषड्भिर्भक्तंफलंदिग्बलम्। षड्राधिकेतुशेषेचक्राद्विशोधितेबलाभावलक्षणाद्भावाद
र्वाचीनराश्यादिःशिष्टतद्दलंसोषड्भक्तःफलंदिग्बलमितिसुगमम्।अत्रशेषंराश्यादिद्विगुणंलवादितोद्विगु
णंचषष्ट्यंशाद्यंबलंस्यादितिसुगमोपायोवेद्यः॥ ॥अथकालबलंनिरूपयिषुस्तावन्नतोन्नतबलमाह॥ ॥अ
ह्नोसमग्रजंरूपंसदास्याद्विदस्त्रिंशद्धृकनतोन्नतेशशिकुजार्कीणांपरेषांबले॥ ॥ अह्नोइति।दि
ग्बलकथनानन्तरंसमग्रजंकालजंबलमुच्यते।विदःबुधस्यसदेतिदिनरात्रौचरूपंबलंस्यात्।त्रिंशद्धृक्तनतोन्नते
शशिकुजार्कीणांपरेषांचबलेभवतः।नतंचउन्नतंचनतोन्नते त्रिंशताभक्तेत्रिंशद्भक्ते।त्रिंशद्धृक्तेचतेनतोन्नते
चत्रिंशद्धृक्तनतोन्नते।अत्रैतदुक्तंभवति।प्रागानीतंनतंघटिकाद्यंत्रिंशद्धृक्तंसचन्द्रभौमशनीनांबलंभवेत्।उ
न्नतंत्रिंशद्धृक्तंसपरेषांरविगुरुशुक्राणांबलंस्यात्।अत्रयुक्तिः।बृहज्जातके।निशिशशिकुजसौराःसर्वदा
ज्ञोह्निचान्यइति।बुधःसर्वदारात्रौदिनेपिबली।चन्द्रभौमशनीनांरात्रौबलमर्थाद्दिवात्वन्येषांबलाभावः।रविगुरुशु
क्राणांदिवसेबलमर्थाद्रात्रावन्येषांबलाभावइतिदिनकरकरनिकरप्रकाशशालित्वलक्षणस्यदिनस्यमध्येहिदिव

ग्रै.म. रवेःप्रकाशोत्कर्षशालित्वादुत्कर्षता ततोदिनबलानामिहसंपूर्णरूपंबलम्।नक्तंबलानांत्वत्रबलाभावः।एवंच
२८ दीत्रस्यमहानिशात्वान्निशायामर्द्धरात्रस्यमहत्त्वम्।अतोरात्रिबलानांरूपंबलम्।अत्रदिनबलानांतुबलाभावः।
मध्याह्नेउन्नतंपरमंमध्यरात्रेतुनतंपरममितिप्रसिद्धम्।अतःसिद्धमेतत्।उन्नतपरमत्वेदिनबलानांबलपरमत्व
म्।उन्नताभावेबलाभावइति।एवंनतपरमत्वेननक्तंबलानांबलपरमत्वंनताभावेबलाभावइति।अथानुपातः।य
दित्रिंशत्तुल्याभिर्नतोन्नतघटीभीरूपमितिबलेलभ्येतेतदेष्टनतोन्नतनाडीभिःकिमिति।नतोन्नतेत्रिंशद्भक्तेस
तीनिशादिनबलवतांवीर्यंक्रमाद्भवेतइतियुक्तम्।अत्रलाघवार्थंपद्यंमयोक्तम्।द्विघ्नंनतंप्राक्परिसाधितंयत्तमी
शसौररबलंभवेत्तत्।षष्टिच्युतंस्यादितरग्रहाणामहर्निशंत्वस्यतुषष्टिरेव॥१॥अत्रकेनचिन्मन्दमतिनानिज
निजाहोरात्रवशाद्ग्रहाणांनतंसाध्यमित्युक्तंतन्निवारणायप्राक्परिसाधितमित्युक्तम्।सूर्यस्येतियावत्।तथा
बुधस्यापिनतोन्नतानुपातेनबलंसाध्यमित्युक्तंतद्वारणायषष्टिरेवेत्युक्तम्।शेषंस्पष्टम्॥अथपक्षबलमाह॥१॥
॥ ॥ शुक्ले न्त्यतिथि १५ हृद्‌तैष्यतिथयोवीर्यंसतांभूच्युतंपापानांहिगुणंविधोरिदम्॥ ॥ शुक्ले शु राम:
क्ले पक्षेअन्त्येकृष्णपक्षेतिथिभिः पञ्चदशभिः १५ ह्रियन्तेभज्यन्तेतेतथा ताहशागतैष्यतिथयः सतांशुभग्रहाणां २

चन्द्रगुरुशुक्राणांपापवियुतस्यबुधस्यचवीर्यंस्यात्।तदेववीर्यंभुवःरूपाच्युतंशुद्धंस्यात्पापानांसूर्यभौमशनीनां
मेतेषामन्यतमेनयुतस्यबुधस्यचवीर्यंस्यात्।एतदुक्तंभवति।शुक्लपक्षेगताःसावयवास्तिथयःपञ्चदशभक्ताः
सतांबलंस्यात्।कृष्णपक्षेएष्याःगम्याःसावयवतिथयस्तिथिभक्ताःसतांबलंस्यात्।सद्वीर्यंरूपाच्छोधितंपक्षद्व
येपिपापानांबलंस्यादिति।इदंपक्षवीर्यंविधोश्चन्द्रस्यद्विगुणंकार्यम्।अथगतैष्यतिथिसाधनमुच्यते।सूर्योनच
न्द्रस्यांशाद्द्वादशभक्ताःगतास्तिथयोभवन्ति।शेषंभागादिगतंतत्षष्टिगुणंकृत्वापुनर्द्वादशभिर्भजेत्।लब्धंजन्मस
मयेवर्तमानतिथ्याश्चान्द्रागतघटिकाःस्युः।पुनःशेषंषष्टिगुणंविधायद्वादशभक्तेपलानि।एवमग्रेपि।तथाकृते
चान्द्राःसावयवागततिथयोभवन्ति।परंयदिशुक्लपक्षेजन्मस्यात्।यदितुकृष्णपक्षेजन्मतदाताएवगततिथ
यस्त्रिंशच्छुद्धाएष्याःसावयवास्तिथयोभवन्तीतिज्ञेयम्।प्रतिपदमारभ्यपूर्णिमान्तंयावच्छुक्लपक्षःपूर्णिमा
न्तादमान्तपर्यन्तमसितइतिप्रसिद्धमेव।सूर्योनचन्द्रस्यलवार्कभागोगतातिथिःषष्टिगुणावशेषात्।द्विचन्द्र१२ल
ब्धंघटिकादिचान्द्रंभवेदिदंपक्षबलस्यसिद्धौ॥१॥कृष्णेतुपक्षेरवगुणच्युतासौगतातिथिःसावयवाऽगतास्या
त्॥गतविकलाःसूर्येन्दुगत्यन्तरेणभक्ताःसत्योगतघटिकाःकरणादौसाधितास्तानात्रोपयुज्यन्तइतिनसाध्याः।

मासास्तथात्र तिथयस्तु हिनांशुमानादित्युक्तेस्तिथिशब्देन चान्द्रदिनस्यैव वाच्यत्वाच्चान्द्र्यो घटिकाः स्युः ... रि ... रु
क्ततद्युक्तम्। करणादौ तु चान्द्रघटीनामज्ञातत्वात्सावनादेव व्यवहारसिद्धेः सावना घटिका आनीता इति बोद्धव्य
म्। एतदन्यैर्वासनाबाह्यैष्टिप्पणकारैरनुक्तमपि मयैव पार्थक्येनोदितमित्यवधेयम्। ननु क्षीणेन्दोः पापत्वाभिधा
नात्कथं चन्द्रस्य शुभत्वमेव व्याख्यातम्। न च चन्द्रस्य साहजिकशुभत्वाच्छुभत्वमेवाद्रियत इति वाच्यम्। विनि
गमनाविरहाद्बुधस्यापि शुभत्वाङ्गीकारापत्तेरिति चेत्। मैवम्। चन्द्रस्य च यवनेश्वरवाक्यबलाच्छुभत्वमेवाङ्गी
क्रियते बुधस्य तु सर्वसंमतत्वाद्यथोक्तैव व्यवस्था। तथा च यवनेश्वरः। क्रूरग्रहोऽर्कः कुजसूर्यजौ तु पापौ शुभाः
शुक्रशशाङ्कजीवाः॥ सौम्यस्तु सौम्यैर्व्यतिमिश्रितोऽन्यैः पापैश्च तुल्यप्रकृतित्वमेति॥१॥ मासे तु शुक्लप्रतिपत्प्रवृ
त्तेः पूर्वे शशी मध्यबलो दशाहे। श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैश्च दृष्टो बलवान्सदैव॥२॥ तस्माद्यवनेश्वरमते
चन्द्रस्य शुभत्वमेवेति सिद्धम्। यद्यत्र चन्द्रस्य पापत्वं यवनेश्वरस्याभिप्रेतं स्यात्तदा तृतीये दशकेऽल्पबल इति नो
क्तमेव स्यात्। तस्मात्क्षीणेन्दुः पाप इत्यन्येषामेव मतम्। एवं मतभेदे पद्धतिकारैर्यवनेश्वरमतमेवाङ्गीकृतम्। यतश्च
न्द्रस्य चेष्टाकेन्द्रजं बलं शुक्लपक्षबलं च सममेव भवतीति पक्षवीर्यं चन्द्रस्य द्विघ्नमुक्तम्। चेष्टाबलपक्षबलसा

स्यं तु चन्द्रस्य पापत्वाङ्गीकारेन सङ्गच्छते। तथाहि। पूर्णिमान्ते गततिथयः पञ्चदश १५ एते पञ्चदशभक्ता जातं प
क्षबलं रूपम्। १ तथा अर्केन्दुः राशिषट्कं ६ षड्भक्ता जातं चेष्टाबलमपि रूप १ मेव। अमावास्यान्ते एष्यतिथिः पूर्ण
म्। अतः पक्षबलाभावः। अर्केन्दुरपि पूर्णम्। अतश्चेष्टाबलाभावोपि। अतश्चेष्टाबलपरमत्वे पक्षबलपरमत्वं चे
ष्टाभावे पक्षबलाभाव इति सिद्धम्। क्षीणेन्दोः पापत्वस्वीकारे तु भूयस्त्वं पापानामिति रूपं पक्षवीर्यं दर्शान्ते समा
याति। नेदं युक्तम्। यतश्चेष्टाबलाभावात्तत्रास्याभावेन भवितव्यम्। अतः पक्षतो सर्वग्रहस्य बलानयने चक्रार्द्धहा
नौ तत्तुङ्गे खलराकमादिस्थले चन्द्रस्य शुभतैव। बुधस्य तु यथा प्राप्ता पापता शुभता वा ग्राह्या। एषां मते रिष्टयो
गादौ यत्रेन्दोः पापत्वाभिधानं तत्र क्षीणेन्दुपरत्वमेव बोध्यमिति दिक्। अत्र सुन्दरमिश्रवाक्यम्। सदा शुभस्यैव वि
धोर्हि निर्दिष्टं पक्षस्य वीर्यं गणकैर्निरुक्तम्। सर्वत्र पापाः कुजसूर्यमन्दाः पापैर्युतो ज्ञोपि परे शुभाः स्युरिति॥ १॥
अथोपपत्तिः। बृहज्जातके। बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण। कृष्णपक्षे पापानां बलं शुभानामर्थाद्बला
भावः। शुक्लपक्षे शुभानां बलमर्थात्पापानां बलाभावः। तत्र प्रतिदिनमुपचीयमानकलाकलापकलानिधिल
क्षणस्य शुक्लस्य पक्षस्य पौर्णमास्यन्ते सकलकलोपचयादुत्कृष्टता। अतस्तत्र शुभानां बलं परमं रूपमितम्।

प्रौ॰ म॰ ततिथयोपि परमाः पञ्चदश १५ शुक्लप्रतिपदादेर्शुभबलाभावस्तत्र गततिथ्यभावोपि। अतोनुपा[illegible]। यदि द
२० दशभिर्गततिथिभी रूपं बलं तद्दशभिः किमिति। गततिथितिथि १५ भागाः शुक्लपक्षे सतां बलं स्यादित्युपपन्न
म्। एवं च एव पूर्णिमान्तः सर्वशुक्लपक्षादिरिति कृष्णपक्षादौ रूपं बलम्।१। तत्रैष्यतिथयः पञ्चदश १५ पर
माः। अमावास्यान्ते शुभानां बलाभावस्तत्रैष्यतिथ्यभावश्च। अतोनुपातेनैष्यतिथिपञ्चदशांशाः कृष्णपक्षे सतां
बलं स्यादित्युपपन्नम्। एवं शुक्लकृष्णपक्षयोर्गततिथ्यनुपातेन क्रूराणामपि बलं साधनीयम्। तत्राचार्यै
र्लाघवाच्छुभबलमेवमुक्तमुभयोरपि पक्षयोश्शुभानां बलं स्यादित्युक्तम्। उपपन्नमेतत्। यतः सितादेरशु
भबलमपचीयते शुभबलं तूपचीयते कृष्णादितस्तु शुभबलमपचीयते क्रूरबलमुपचीयते यावानेवोपचय
स्तावानेवापचय इति। उपचयापचययोरनुरूपमध्य इति रूपात्च्युतं शुभबलमशुभबलं स्यादिति। सदा शुभस्यै
व विधोः पक्षबलं वक्ष्यमाणचेष्टाकेन्द्रांशस्य चेष्टाबलेन सममेव जायत इति पुनस्तयोर्योगे क्रियमाणे द्विघ्नमेव
भविष्यतीति पूर्वमेव द्विघ्नं कार्यमित्युक्तम्। एवं सूर्यस्यायनबलमपि चेष्टाबलेन तुल्यत्वाद्द्विगुणं कार्यमित्यग्रे रामः
प्रतिपादयिष्यते। अर्कस्य द्विघ्नमिति। अतः पुष्यवतोश्चेष्टाबले वीर्यैक्ये क्रियमाणे सति नयोज्ये पूर्वमेव योजि २०

तत्वादत एव वक्ष्यते। प्रागवनवीयीयते इति सर्वं निरवद्यम्। पक्षवीर्यं साधनं सुगमोपायेनोक्तं पराशरेण। चन्द्राद
र्कं विशोध्य च। अङ्गाधिके विशोध्यार्काद्भागीकृत्य त्रिभिर्भजेत्॥ पक्षजं बलमिन्दुज्ञशुक्रार्याणां तु षष्टितः॥ द्वित्वा
न्येषामिति। अत्रापि ज्ञशुक्रार्याणां यद्बलं तद्द्वेन्दोः पक्षद्वयेऽपि बलमित्यर्थलाभात् क्षीणचन्द्रः शुभ एवेति प्रौढं
निर्व्यूढम्। अस्योपपत्तिस्त्रैराशिकेनोच्चबलवत्सुगमा। अथ त्र्यंशबलमाह॥ ॥ अथाह्नस्त्र्यंशकेषु क्रमा
त्। सौम्यार्कार्कभुवां निशः शशिसितारार्णां च रूपं सदेज्यस्य॥ ॥ अथेति। पक्षबलानन्तरम्।
अह्नो दिनस्य त्र्यंशकेषु सौम्यार्कार्कभुवां क्रमाद्रूपं बलं स्यात् सौम्यो बुधः। अर्कः सूर्यः। अर्कभूः शनिः। तेषां सौम्या
र्कार्कभुवामित्यत्र द्वन्द्वसमासः। निशः रात्रेस्त्र्यंशकेषु क्रमात् शशिसितारार्णां चन्द्रशुक्रभौमानां रूपं बलं स्यात्।
चकारः समुच्चये। ईज्यस्य बृहस्पतेः सदेति दिवानिशं यत्रक्वापि त्र्यंशे रूपं बलं स्यात्। एतदुक्तं भवति। प्रथमतो
दिने रात्रौ वा जननमस्तीति विज्ञाय ततस्तन्मानस्य त्रेधा विभागं विधाय यस्मिंस्त्र्यंशे जन्म तदंशपतेः रूपं बलं गुरो
स्तु सदैव रूपं बलं ग्राह्यमिति। अत्र प्रोक्तग्रहाणां दिनरात्रित्रिभागबलं होरागमप्रमाणसिद्धम्। तदुक्तं होरामक
रन्दे। निशामुखे शातरुचिर्बलीयान्भृगुर्निशीथे कुसुतो निशान्ते॥ प्रातर्बुधो मध्यदिने दिनेशः शनिर्दिनान्तेऽपि

ग्रो·म· वणः सदेवेति॥१॥अथवर्षेशादिबलमाह॥ ॥अथाङ्घ्रिचयाद्बलीकिलसमामासद्युहोरेश्वरइति॥ ९॥ अथशब्द
२१ आनन्तर्ये। समामासद्युहोरेश्वरः अङ्घ्रिचयात्पादवृद्ध्यावलीस्यात्। समावर्षं,मासः प्रसिद्धः; द्युदिनं द्युइत्यव्ययं
दिनशब्दवाचकमितिक्षीरस्वाम्यादयः। होराकालहोराआस्यमीश्वरः स्वामी, अङ्घ्रिवृद्ध्या बली वर्षेशस्यपादोनंब
लंमासेशस्यार्द्धंदिनेशस्यत्र्यंश्चरणाहोरेशस्यरूपंबलमित्यर्थः। किलेत्यागमप्रामाण्यसूचनार्थम्। वर्षमासेश
योरानयनमुक्तंकेशवसांवत्सरैः स्वकृतटीकायाम्। तद्यथा। द्विघ्नोद्युपिण्डोरदभूयुतोर्कयुक्खाङ्गाग्निहृत्तथा
ग्निहृतःफलेयुते॥ वेदैर्गुणैस्त्रिद्विहृतेः द्विशेषितैः कौद्ब्रह्मतुल्यकरणेऽब्दमासपौ॥१॥अस्यार्थः। ब्रह्मतुल्यकरणे
द्युपिण्डोऽहर्गणः द्विघ्नः एकत्ररदभूमिर्द्वात्रिंशदधिकशतेनयुतः॥अपरत्रअर्कैर्द्वादशभिर्युक्युक्तः कार्यः।आ
द्यः खाङ्गाग्निभिः षष्ट्यधिकशतत्रयेणहृत्।भक्तः।अपरः खाङ्गाग्निभिस्त्रिंशताहृतः।उभेफलेक्रमेणवेदगुणैर्यु
तेततस्त्रिद्विहृतेअद्रिशेषितेसप्तवष्टेसतीअर्कमारभ्यगतौवर्षमासेशौभवतः।अत्रप्रगृह्यत्वाभावःप्रामादिकः।
अतस्त्रिद्विहृताद्रिशेषितेस्तोब्रह्मतुल्येरवितोऽब्दमासपाविति पाठः पाठ्यः।त्रिद्विहृतेचतेअद्रिशेषितेचेतिवि राम:
ग्रहः।फलइतिसप्तम्यन्तंकृत्वायथाश्रुतमेवव्याख्येयमितिवा।अत्रोपपत्तिः॥सावनवर्षमासेशौसाध्येते।तत्रता २१

वत्कल्पादेः सकाशाज्जन्मदिनजार्कोदयपर्यन्तमहर्गणः साध्यः। ततो यदि दिनानां षष्ट्यधिकशतत्रयेण ३६० त्रिंश
ता चैकं वर्षमेको मासश्च क्रमेण लभ्यते तदेष्टाहर्गणेन किमित्यभीष्टाहर्गणः खाङ्गाग्निहृत् खाग्निहृतः फले सावना
निगतवर्षाणि सावनागतमासाश्च भवन्ति। यद्येकेन वर्षेणैकेन मासेन चैकमितो वर्षेशो मासेशश्च क्रमेण लभ्यते
तदेष्टैर्वर्षैर्मासैश्च किमित्यभीष्टवर्षमासतुल्या एव तदीशाः स्ततो वाराः सप्तैवेति सप्ततष्टाः शेषं वर्षेशं मासेश्वरौ भ
वत इत्युपपन्नम्। अथैतौ कस्माद्वासराद्गणनीयाविति चिन्त्यते। कल्पादौ वर्षेशो रविरासीत्ततो द्वितीयवर्षे बुध
स्तृतीयवर्षे शनिरतो रवेरधःकक्षाक्रमेण तृतीयस्तृतीयो वर्षेश इति। एतदुक्तं भवति। कल्पगतसावनवर्षगणो
द्वितष्टे यदि शून्यं शेषं तदा सूर्योऽब्दपो यद्येकस्तदा बुध इत्यादि। एवं कल्पादौ मासेशो रविस्ततो द्वितीये मासि मासे
शो भौमस्तृतीये गुरुरतो रवेरूर्ध्वकक्षाक्रमेण द्वितीयो मासपतिरित्यवधेयम्। उक्तं च सूर्यसिद्धान्ते। वर्षाधिपतय
स्तद्वत्तृतीयाः परिकीर्तिताः॥ उर्ध्वक्रमेण शशिनो मासानामधिपाः स्मृता इति। तद्वदिति मन्दादधःक्रमेणेत्यर्थः।
शतानन्दोऽपि। शास्त्रादिसौराब्दगणात्कलेर्वा वर्षाधिपाः सप्तहृतावशेषाः। शुक्रेन्दुवाचस्पतिसूर्यसौम्यशनैश्च
राः क्रमशो भवन्ति॥ १॥ अब्दोऽर्कनिघ्नो रविमासयुक्तः सप्तावशेषो रविमासनाथाः॥ शुक्रसूर्यारसुरेज्यसौरिच

ग्रै·स· न्द्राद्युगात्सावनमासतोऽन्ये॥ २॥ सूर्यादिभिः सावनवर्षमासनाथयोः साधितत्वात्साधितौ सौरवर्षमासपती सूर्य। दु
३२ क्तक्रमेणगणनीयाविति सिद्धम्। अहर्गणादावुच्चावचजनप्रसिद्धरविचन्द्रभौमबुधेत्यादिक्रमेण वारगणना
याउक्तत्वात्। अत्रतु तदन्यथाभावे शिष्याः क्लिश्येरन्निति यथा तेनैव क्रमेण वर्षमासपत्योर्गणना विधातुं शक्यते तथा
यतितमाचार्यचरणैः। तद्यथा। कल्पादौ रविर्वर्षस्वामी ततो द्वितीयवर्षे वर्षेशो बुधस्तयोः प्रसिद्धक्रमे त्रिमितम
न्तरमेवं प्रथमाग्रिममासस्वामिनोर्द्विमितमन्तरमतोऽनुपातः। यद्येकेन वर्षेण मासेन च त्रिद्विमिते अन्तरे लभ्येते तत
दिष्टवर्षैर्मासैश्च किमिति। उक्तं च सूर्यसिद्धान्ते। मासाब्ददिनसंख्याप्तं द्वित्रिघ्नं रूपसंयुतम्। सप्तोद्धृतावशेषौ तु वि
ज्ञेयौ मासवर्षपौ॥ अतः कल्पगताः। वाशिष्ठेपि। माससमादिनं भक्ताद्युगणाल्लब्धं पृथग्यमगुणाग्रम्॥ सैकं च स
प्तभक्तं मासस्समाधीश्वरावकौ तु। सोमसिद्धान्तेपि। द्युगणात्त्रिंशता षड्घ्नषष्ट्या द्वित्रिहते फले॥ सैके सप्तावशेषि
ते मासवर्षपती क्रमादिति। वर्तमानगणनार्थं सैकमित्युक्तमत्र। अहर्गणो द्विष्ठः खाङ्गाग्निहृत्खाग्निहृतः फले
त्रिद्विहते अद्रिशेषिते अर्कादितौ वर्षमासपती प्रसिद्धक्रमेण भवतइत्युपपन्नम्। अत्राचार्येण लाघवार्थं दिन रामः
गणस्य खण्डद्वयं कृतम्। एवं कल्पादेर्ब्रह्मतुल्यकरणादिपर्यन्तम्। अपरं ब्रह्मतुल्यादेर्जन्मदिनजार्कोदयाव ३२

धियदेवद्युगणस्य द्वितीयखण्डं स एव ब्रह्मतुल्याहर्गण इति प्रसिद्धतरम्। अतो द्विष्ठो ब्रह्मतुल्यद्युपिण्डः खाङ्का
ग्निहृदित्याद्युपपन्नम्। परमेतौ वर्षमासशेषौ ब्रह्मतुल्यादिजाब्दमासशेषाभ्यां भवतोऽपेक्षितौ तु रविवारादितोऽतः क्षे
पान्वितौ कार्यौ तत्र क्षेपः साध्यते। कथितकल्पगतोऽर्कसमागणो रविगुण इत्यादिप्रकारेण ब्रह्मतुल्यादौ साधितो
हर्गणः करशरयुगसप्ताभ्राभ्रषड्द्विषट्खद्वितुरग ७२०६३६००७४५२ प्रमितः॥ अयं षष्ट्यधिकशतत्रयभ
क्तो लब्धा आगताब्दाः सावनाः। २०० १७६६६ ८७ शेषं रदभूतुल्यम्। १३२ गताब्दास्त्रिगुणाः सप्तभक्ताः। शेषं पञ्च
५ अतोऽग्र्न्यादितस्त्रिगुणवर्षेषु पञ्चमितः क्षेपो योज्यस्ततः सप्ततष्टे सूर्यादितोऽब्देशः स्यादिति युक्तम्। यदि तु
केवलवर्षेष्वेव क्षेपो योज्यतेऽनन्तरं त्रिभिर्गुण्यते तदा क्षेपस्त्रिगुणो योजितो भविष्यतीति त्रिभक्तः क्षेपो योज्यः
अत्र पञ्चमिते क्षेपे त्रिभक्ते निरग्रं फलं नायातीति पञ्चसु सप्त संयोज्य त्रिभिर्भागे गृहीते लब्धाश्चत्वारः ४ अतो वे
दैर्युतमिति युक्तम्। एवं द्युगणस्त्रिंशद्भक्तो लब्धा आगतमासाः सावनाः २४० २१ २००२४८॥ शेषमर्क १२ तुल्यमाग
तमासा द्विगुणाः सप्तभक्ताः शेषं षट् ६ अतो द्विघ्नमासेषु षण्मितः क्षेपः क्षेप्यस्तत्र सप्ततष्टे सूर्यादितो मासेशः
स्यात्। अत्राचार्यैः केवलवर्षेष्वेव क्षेपो योजित इति द्वाभ्यां भक्तो जातास्त्रयः। अतो गुणैर्युतं फलमित्यपि साधु

यद्वा सावनवर्षान्ते यो वारः सोऽब्दपतिः सावनमासान्ते वारो मासेश इति। अहर्गणः खाङ्गाग्निभक्तः खाग्निभक्त
श्च फले सावनवर्षमासा भवन्तीति प्रागुक्तं ततोऽनुपातः। यद्येकेन सावनवर्षेण षष्ट्यधिकशतत्रयं दिनानि त
दैष्टैः किमिति फलं ग्रन्थादेः सकाशादिष्टसावनवर्षादिपर्यन्तं सावनदिनानि स्युस्ततो वारः सप्तावशेषतः सप्ततष्टा
नि कार्याणीति पूर्वमेव लाघवार्थमब्दहिनानि ३६० सप्तभक्तानि शेषं त्रयमतो ग्रन्थोदितः सावनाब्दगण
स्त्रिभिर्गुणनीय इत्युपपन्नम्। एवं मासदिनानि ३० सप्तभक्तानि शेषं द्वयमतो मासगणो द्विगुण इति युक्तम्। अ
स्मिन्मते सूर्यात्प्रसिद्धक्रमेणैव गणनेति सर्वमवदातम्। क्षेपोपपत्तिः प्राग्वदेव। अथाब्दमासशेषदिनयोग
कारणमुच्यते। ब्रह्मतुल्यकरणादौ सावनवर्षेशः शुक्र आसीत्। वर्षशेषदिनानि रदभूतुल्यानि १३२ अतो ग्रन्था
देरष्टाविंशत्यधिकशतद्वयमितेषु सावनदिनेषु गतेषु सत्सु वर्षेशश्चन्द्र इति ज्ञायते। ग्रन्थादितो वर्षेशानयने
वर्षदिन ३६० पर्यन्तं चन्द्रो नायाति। कल्याद्यहर्गणतो वर्षनाथे साध्यमाने ग्रन्थादितो गगनाङ्ग-गुण ३६० दिनम
ध्येऽपि चन्द्रो लभ्यते। अतो ग्रन्थादिजाब्दशेषदिनानि संयोज्य वर्षेश्वरः साध्यः। अन्यथा ब्रह्मतुल्याहर्गणसाधित
वर्षेशस्य क्षेपयुतस्य कल्या  द्यहर्गणसाधितवर्षेश तुल्यत्वं भज्येतैव। एवं मासेशेऽपि योज्यम्। एवममुनाप्र

कारेणजन्मकालेवर्षमासेशौसाध्यौ।यत्रवारेरव्यादिकेजन्मसएवदिनेशइतिस्पष्टम्।अत्रवारप्रवृत्तिरर्कोद
यादेवनतुगणितसाधितवारप्रवृत्तिकालात्।अग्रुरलोवक्ष्याम्।वारप्रवृत्तेर्जननोत्थवारःप्रकल्पनीयःसदिना
धिनाथइतिगणेशेनोक्तंतदयुक्तंमुनिमतविरोधात्।तथाचवसिष्ठसंहितायाम्।वारप्रवृत्तिविज्ञानंक्षणवारा
र्थमेवतत्॥अन्येषुसर्वकार्येषुदिनादिरुदयोरवेरिति॥१॥यद्गणितेनवारप्रवृतिसाधनंकृतंतत्क्षणवारार्थं
कालहोरासाधनार्थमित्यर्थः।अन्यकार्येषुसूर्योदयादेववारस्यप्रवृत्तिरिति।होरेश्वरानयनंवसिष्ठसिद्धान्ते।
प्रभाकरस्योद्गमनात्पुरस्याद्वारप्रवृत्तिर्दशकन्धरस्य॥चरार्द्धदेशान्तरनाडिकाभिरूर्ध्वंतथाधोप्यपरत्रतस्मा
त्॥४॥वारप्रवृत्तेर्घटिकादिनेशात्कालाख्यहोरापतयःक्रमेण॥सार्द्धनंनाडीद्वितयेन २।३० षष्ठःषष्ठ
श्चषष्ठश्चपुनःपुनश्चेति॥२॥स्वार्कोदयाद्येनकालेनप्रागूर्ध्वंवालङ्कार्कोदयःसकालोवारप्रवृत्तिकालइतिस्प
ष्टम्।सौरमितेतुलङ्कार्द्धरात्रेसृष्टिरितिस्वार्द्धरात्राद्वराभावेनकेवलंदेशान्तरघटीभिरेवप्रागूर्ध्वंवावारप्रवृत्ति
रित्युक्तंसूर्यसिद्धान्ते।तद्देशान्तरनाडीभिःस्पार्द्धेऽभ्यधिकोनकइत्यादिना।वसिष्ठादिमुनिब्रह्मगुप्ताद्याचार्यम
ताविरोधायमप्यर्थमादित्यव्याहृत्यतस्माद्देशान्तरनाडीभिःप्राक्पश्चाद्दशयुक्तोनेस्पार्द्धमितेकालेवारप्रवृ

बौ.म. तिः।परमत्रस्पार्द्धपदंनिरस्तजस्पार्द्धविषयमित्यनेनसौरभाष्येःस्पष्टितृचरणैःसम्यग्व्याख्यातम्।एवमने
३४ नप्रकारेणहोरेशोत्तेयद्विप्राज्ञाः।केचित्तुतत्कालार्कन्यूनलग्नांशपिण्डोभक्तःपञ्चदशभि१५र्भुक्तहोराद्
त्यनेनहोरेशमाहुः।अत्रैवंमतद्वयेऽर्कलग्नान्तरसाधितोहोरेशोऽत्रपद्धतौग्राह्यइत्यस्मद्गुरूणांमतम्।एतदे
वयुक्तमुत्पश्यामः।तथाहि।भवनस्यार्द्धहोरेत्युक्तेर्दिनावसानसमयेषट्लग्नानिव्यतीतानिभवन्ति।तद्र्द्धानि
चद्वादशतुल्यानीतिद्वादशैवहोराउक्तास्ताएवतत्कालार्कन्यूनलग्नांशपिण्डइत्यनेनायान्तीत्ययमेवहोरासा
धनप्रकारोऽत्रहोराशास्त्रेग्राह्यइतियुक्तम्।नचानेनैवप्रकारेणसर्वत्रहोरेशानयनेपूर्वप्रकारेणतदानयनमुन्म
त्तप्रलपितमिवस्यादितिवाच्यम्।यस्यग्रहस्यवारेयत्किंचित्कर्मप्रकीर्तितम्।तत्तस्यकालहोरायांसर्वमेववि
धीयतइत्यादौतस्योपयोगात्।तस्मात्पद्धतावर्कलग्नान्तरसाधितोहोरेशोग्राह्योऽन्यत्रतुवारप्रवृत्तेर्घटिकाद्व
त्यादिप्रकारानीतोहोरेशोग्राह्यइतिविषयव्यवस्थासुस्था।तत्कालार्कन्यूनलग्नस्यराश्यादेर्भागकरणार्थंत्रिंश
द्गुणकःपञ्चदशहरश्चा।गुणहरौहरेणापवर्त्यलब्धंद्वयंगुणस्थाने।अतोऽर्कोनलग्नराश्यादिर्द्विगुणंकार्यंतथाकृ राम:
तेराशिस्थानेयन्निष्पद्यतेतेनसप्त७तष्टेनतुल्याएवदिनाधिपाद्यारविशुक्रसौम्यशशाङ्कसौरेज्यकुजाइत्यनेनग ३४

ताहोरेशाः स्युः। यद्वा। द्विघ्नस्यार्कोनलग्नस्य केवलं राशयः पञ्चगुणाः सप्तभक्ताः शेषसमो गतो होरेशो दिनाधिपात्क्र
मेणैव स्यादिति लाघवम्। अत एवोक्तं पद्धतिप्रकाशे वीनाङ्ग २ घ्नात् गृहेषु ५ घातो होरापतिर्वारपतेः प्रयात इ
ति। अधुना चेष्टाबलं विवक्षुस्तावत्तदङ्गीभूतमायनबलं भुजङ्गप्रयातेनाह॥ ॥ सदाक्रान्तिभागैर्युता ज्ञस्य सि
द्धाः २४ शनीन्द्वोर्युतोनाः क्रमाद्याम्यसौम्यैः॥ विलोमं परेषां गजाम्भोधि ४८ भक्ता भवेदायनं वीर्यमर्कस्य द्वि
घ्नम्॥ २॥ ज्ञस्य बुधस्य सदेति दक्षिणोत्तरैर्वा क्रान्तिभागैर्युताः सिद्धाः गजाम्भोधिभक्ताः सन्तः आयनवीर्यं भवेत्। श
नीन्द्वोः क्रमादिति याम्यैर्युताः सौम्यैरूनाः सिद्धाः परेषां रविकुजगुरुशुक्राणां विलोममिति सौम्यैः क्रान्त्यंशैर्युता
याम्यैरूनाः सिद्धाः गजाम्भोधिभक्ताः आयनं बलं स्यात्। एवं साधितं सूर्यस्यायनबलं द्विघ्नं कार्यम्। द्विघ्नमाह न्य
ऽतस्तद्द्विघ्नं द्विगुणं कार्यमित्यर्थः। क्रान्तिसाधनं ग्रहलाघवे। चत्वारिंशदशीतिरद्रिकुभवः क्वसेन्दवोऽम्भू [illegible] षट्
खाक्षीणि जिनाश्विनोऽङ्ग विकृतीरवाब्ध्याश्विनः सायनात्॥ खेटाद्दोर्लवदिग्लवप्रमगतोऽङ्कोऽसौ तदूनागत [illegible] घ्न
[illegible]ऽऽशलब्धियुगद्घाहृतांशाद्योऽपमः स्यात्त्वदिक्॥ १॥ अत्रोपपत्तिः॥ अयनं गमनं तद्वशादुत्पन्नं बलम् [illegible]न
बलमित्यन्वर्थनाम यत्रायने येषां बलं तदुक्तं सारावल्याम्। उत्तरमयनं प्राप्ताः शुक्रकुजार्कसुरमन्त्रिणो बलिनः।

पी॰ म॰ याम्यशशिरविपुत्रौ द्वे अपि शशिजः स्वर्गेहस्थ एवेति। उत्तरायणे शुक्रार्कंकुजगुरूणां संपूर्णं बलमुक्तं तत्र
३५ सायनकमिथुनान्ते परमोत्तरगमनात्संपूर्णं बलं संपूर्णतारूपात्मिकेति रूपं बलम्। अर्थादेवैषां सायन[illegible]धुर
न्ते दक्षिणगमनस्य परमत्वाद्बलाभावः। दक्षिणगमनपरमत्वे रूपं बलम्। चन्द्रशन्योः परमोत्तरगमने [illegible] बला
भावः। बुधस्य तु परमोत्तरगमने परमदक्षिणगमने च रूपं बलम्। बलाभावस्थानाद्बलपरमत्वस्थान[illegible]न्तं हि
गुणपरमक्रान्त्यंशा गजाम्भोधिमिताः सन्ति। अथ बलाभावस्थानादहोरात्रवृत्तनिष्ठग्रहस्थानस्यान्तरेंऽशैः परमा
शास्तैर्बलानयनं कर्तुमुचितमिति चन्द्रशनैश्चरयोः सौम्यक्रान्तौ जिनांशमितयां परक्रान्तौ योजितायां सत्यां सौ
म्यायां तु वियोजितायां बलाभावस्थानग्रहस्थानान्तरालेऽपमांशा भवन्ति। कविरविगुरुभौमानां सौम्यक्रान्तौ पर
क्रान्तौ २४ युक्तायां याम्यायां वियुक्तायां बलाभावस्थानाद्ग्निमाक्रान्तिर्भवति। लाभावस्थानादेतक्रान्तिभागान्त
रे खेटोऽस्तीति भावः। बुधस्य तु सौम्यायां याम्यायां च योजितायां भुज्यमानायनादेरग्निमाक्रान्तिर्भवति। यदाष्टचत्वा
रिंशद्भागान्तरे ग्रहस्तदा संपूर्णं बलम्। अथानुपातः। यदि बलाभावस्थानान्तरेणाष्टाचत्वारिंशन्मितेन रूपं बलं त रामः
देष्टेन किमिति सर्वमुपपन्नम्। ननु सर्वत्र साध्यस्य परमत्वमभावश्च द्वाविमौ निर्णीयते तत्र चान्यस्यापि परमत्वाभा ३५

वौनिर्णीयतदन्यवशादन्तरेऽनुपातः क्रियते। यथा ग्रहफलाभावे गतिफलं परमं ग्रहफलपरमत्वे गतिफलाभा
वस्तत्र केन्द्रकोटिज्याया अपि परमत्वाभावो ऽत स्तदन्तरे केन्द्रकोटिज्यातोऽनुपातः क्रियते। प्रकृते च बुधस्यायन
द्वितयेपि बलस्योक्तत्वात्क्वाप्यभावस्य निर्णेतुमशक्यत्वात्त्रैराशिकं कथं प्रवर्तते इति चेत् सत्यम्। बुधस्य दक्षिणग
मनसमाप्तौ संपूर्णबलं ततो ह्रासक्रमेण सायनमेषादावर्द्धबलस्य ह्रासः। ततो वृद्धिक्रमात्परमोत्तरगमने संपूर्णं
बलं पुनर्ह्रासक्रमात्तुलादावर्द्धबलापचयः। यद्यत्र बलाभावशब्देन बलशून्यत्वं विवक्षितं तत्तु कथमपि न स्या
त्। अयनद्वयेपि संपूर्णबलाङ्गीकारात्। किंतु सायनमेषादौ तुलादौ च क्रान्तेरभावेन रूपबलस्यार्द्धतुल्यपरमह्रा
सात्त्रैराशिकप्रवृत्तेरन्यथानुपपत्त्या तदेव बलाभावस्थानमिति मन्तव्यम्। अथानुपातः। बलपरमापचयलक्ष
णाभावस्थानस्य बलपरमत्वस्थानस्य चान्तरे चतुर्विंशतिभागाः सन्तीति चतुर्विंशतिभागैरूपार्द्धं बल[illegible] यथा
स्थितग्रहक्रान्त्यंशैः किमिति। एवं च क्रान्तिभागाष्टचत्वारिंशदंशोनिष्पन्नः। अयं रूपार्द्धयोज्यस्तत्र मिथो[illegible]भ्या
मिलनेन समच्छेदविधाने कृते सदा क्रान्तिभागैर्युताः सिद्धाः अष्टचत्वारिंशद्भक्ता बुधस्यायनबलं स्यादिति[illegible]क
म्। एवं सदायनबलानयनं पद्धतिप्रकाशे लाघवेन मयोक्तम्। याम्योत्तरैः स्वाद्रि·युतापमांशैर्युतायुताः पूर्णगुणोः

ग्री.मं. शनीन्द्वोः॥ व्यस्तं परेषामनिशं बुधस्य युताभवेदायनवीर्यमेतत्॥१॥ गणेशदामोदरसूर्यमुख्यैः स्पष्टाङ्गमात्मा-
२६ धितमात्मतन्त्रे॥ उपेक्षितं त्वाद्गुरुकेशवाद्यैरयुक्तमेवेति सुधीभिरूह्यम्॥२॥ स्पष्टार्थाविमौ॥ अत्र वासना [illegible] दि-
चतुर्विंशत्यंशैस्त्रिंशत्कलातुल्यं बलं तदिष्टक्रान्तिभागैः किमिति। अत्र गुणहरौ षड्भिरपवर्त्य जातौ गुणस् [illegible] पञ्च-
[illegible] हरश्चत्वारः ४ यो राशिः पञ्चभिर्हन्यते चतुर्भिर्ह्रियते स स्वाङ्घ्रियुत एव भवतीति स्वाङ्घ्रियुतापमांशे [illegible] क्रमाद्-
षोपपत्तिः प्रतिपादितैव। स्पष्टापमाद्बलसाधनस्यायुक्तत्वमग्रे वदिष्यामः। प्रकारान्तरमपि तत्रैवोक्तम्। प-
ह्नापक्रमसिद्धां २४ शसंस्कृतं रूपमर्द्धितम्। रूपाद्यमायनं वीर्यं स्याद्द्वयोर्द्विगुणं कुरु॥३॥ दृष्टक्रान्तिसं-
स्कृतापरक्रान्ति २४ गजाम्भोधिभक्तायनबलं स्यादिति प्रागुक्तम्। तत्र चतुर्विंशत्यापवर्ते कृते पक्रमसि-
द्धांशसंस्कृतमित्यादिप्रकारो निष्पद्यते। नन्वेतदायनबलं स्पष्टक्रान्तित एव साधयितुं युज्यते न मध्यक्रान्ति-
तः। तथाहि। अयनं गमनं तदुत्पन्नं बलमायनबलमिति तावत्प्रसिद्धम्। गमनं तु चन्द्रादीनां स्पष्टक्रान्तिवशे-
नैव भवति। क्रान्तिर्नाम नाडीमण्डलात्क्रान्तिवृत्तावधि दक्षिणोत्तरगमनं क्रान्तिवृत्तादपि दक्षिणोत्तरमन्तरं श- रामः
रः। तयोः संस्कारेण नाडिकामण्डलाद्ग्रहस्य स्पष्टं दक्षिणोत्तरगमनं सैव स्पष्टक्रान्तिरुच्यते चन्द्रादीनां परमश- २६

| अंशाः | चं | मं | बु | गु | शु | श |
|---|---|---|---|---|---|---|
| दृमां | ४ | ५ | ४ | १ | ८ | २ |
| संस्कृ | ३० | २८ | ०० | ३० | ०० | ३० |

| च | मं | बु | गु | शु | श |
|---|---|---|---|---|---|
| २८ | २९ | २८ | २५ | ३२ | २६ |
| ३० | ३८ | ०० | ३० | ०० | ३० |

एभिर्युताश्चतुर्विंशत्यंशाजाताश्चन्द्रादीनांपरमाःक्रान्त्यंशालिख्यते। परक्रान्तिंगृहीत्वायदिद्विगुणयारूपंबलंतदेष्टस्पष्टक्रान्तितपरक्रान्त्याकिमित्यनुपातेनायनवीर्यसाधनंयुक्तंजिनांशतुल्यायांपरक्रान्तौतुग्रहस्यविमण्डलस्थत्वेनपरमगमनाभावाज्जिनांशमितपरक्रान्तिवशतोयनबलनयनंनितरामयुक्तमेवेतिपूर्वःपक्षः ॥ अत्रब्रूमः ॥ किंभवताजिनांशमितक्रान्तिपठितशरयोगेनयास्पष्टक्रान्तिःसापरक्रान्तिशब्देनोच्यतेऽथवाप्रतिगोलमत्यधिकायास्पष्टक्रान्तिःसापरक्रान्तिशब्देनोच्यते। नाद्यःपक्षः। चन्द्रस्यबलसंपूर्णत्वाभावयोःसततंव्यभिचारात्कदाचिद्व्यभिचाराच्च। भौमादीनांवर्षशतैरनेकैःसंपूर्णबलालाभाच्च। तथाहि। यदाऽयनांशोननवराशिसमश्चन्द्रःपातस्त्वयनांशसमस्तत्रचन्द्रशरःपठितशरतुल्यःपरमः ४। ३० क्रान्तिर्जिनांशमिता २४ एतत्संस्कारेजातापरक्रान्तिरष्टाविंशत्यंशाःसार्द्धाः २८। ३०। अतस्तदैवसंपूर्णबलम्। यदातुदक्षिणगोलेसप्तविंशतितुल्यापरक्रान्तिश्चन्द्रस्यतदापिपरमगमनात्संपूर्णबलेनावश्यंभवितव्यम्। भवन्मतेसार्द्धगजाश्विमितक्रान्तिव्यतिरिक्तस्थलेसंपूर्णबलंनायातीतिदक्षिणगमने परमत्वे

ग्र·म· पिसंपूर्णबलंनास्तीतिनितरामयुक्तः प्रथमपक्षः।नचतदानींपरमगमनमेवनास्तीतिवाच्यम्।नाडीमण्डलादु
३७ त्तरतोदक्षिणतोवागच्छतोग्रहस्यपुनर्नाडीमण्डलाभिमुखगमनप्रवृत्तिजक्रान्तेःपरक्रान्तिशब्दवाच्यत्वात्।किं
च।भौमादीनांपातोयद्ययनांशसमःस्यात्तदाचन्द्रवत्तत्पूर्णबलमपिकदाचित्स्यात्।अयनांशसाम्यंतुपातस्यम
न्दतरगतित्वादिहयुगेवर्षशतैरनेकैरपिनसंजाघटीतीतिभौमादीनांसंपूर्णबलंकथमपिनस्यादितिदूषणा
न्तरम्।नान्त्यः।तस्याद्विगुणत्वेनायुक्तत्वात्।तथाहि।एकस्मिन्नयनेयावतीपरक्रान्तिस्तावत्येवचेदन्यस्मिन्न
पिस्यात्तदातयोर्योगेकृतेद्विगुणैवपूर्वक्रान्तिर्भवतीतिद्विगुणयापरक्रान्त्येत्यादावनुपातःसार्थकःस्यात्।अन्याय
नेतु।परक्रान्तिर्विलक्षणैवभवतीतिद्विगुणपरक्रान्त्येत्यस्यानुपातस्यानर्थक्यात्सत्पक्षोद्वितीयोपि।नचायन
द्वयेपियेपरक्रान्तीतद्योगेनयद्द्विरूपंबलंतदेष्टस्पष्टक्रान्तिसंस्कृतपरक्रान्त्याकिमित्यनुपातोयुक्तइतिवाच्य
म्।अयनद्वितयजपरक्रान्तिज्ञानस्यदुर्गमत्वात्।अथवक्तव्यंयत्रस्पष्टक्रान्तेःपरमत्वंसोऽयनसन्धिरितिप्रसिद्धे
रयनांशोनितपातादित्यादिपाताधिकारोक्त्याचन्द्रादीनामयनसंधीसंसाध्यततस्ताभ्यांपरक्रान्तिज्ञानंसुलभमि राम
ति।पुनर्भवेदेवम्।यदिस्पष्टक्रान्तिवशादायनवीर्यानयनमार्षमूलकंस्यात्।आर्षमूलकत्वाभावादेवपरमलाघ ३७

विकेराचार्यैर्जिनांशमितक्रान्तिरेव परमायनस्थानमङ्गीकृतं तद्युक्तमेव। तथा च पराशरः। सायनांशग्रहभुजरा
शीनिषुभि ४५ र्भिः सुरैः ३३। सूर्यैः १२ र्हृताक्रमाद्राशिभागः स्यादनुपाततः॥ १॥ एवं राश्यादिके युञ्ज्यादर्कारार्ये
शनस्य च॥ राशित्रयमथो युञ्ज्यान्मेषादिस्थेषु तेषु च॥ २॥ तुलादिस्थेषु राश्यादींस्त्रिराशिभ्यो विवर्जयेत्॥ चन्द्रा
र्क्योर्विपरीतं स्यात्सदा युञ्ज्याद्बुधस्य तु॥ ३॥ भागीकृत्य त्रिभिर्भक्तं ग्रहाणामयनं बलम्। रवेर्द्विगुणमेवं स्यादिति।
अस्यायमर्थः। सायनांशग्रहभुजराशिप्रमितखण्डकैक्यं भोग्यखण्डाहतशेषांशत्रिंशदंशलब्धभागादियुक्तं
कार्यं तत्त्रिंशद्धृतं राश्यादिकं स्यात्। एवं राश्यादिकेषु सायनेषु सूर्यभौमगुरुशुक्रेषु मेषादिस्थेषु सत्सु राशिस्थाने रा
शित्रयं योज्यम्। तुलादिस्थेषु तु प्राप्तराश्यादिकं राशित्रयाद्विशोधयेत्। चन्द्रशन्योर्विपरीतम्। बुधस्य तु सर्वदा यो
ज्यम्। ततस्तदंशानां त्र्यंशः षष्ट्यंशात्मकमायनं बलं स्यात्। सूर्यस्य द्विगुणं कार्यमिति। अत्रोपपत्तिः। क्रान्त्यभावे 37
ग्रहस्य रूपार्द्धं बलं तत्स्थानं बलाभावस्थानान्तरे चतुर्विंशतिक्रान्तिभागात्मके त्रिमितायनराशयः सन्तीति जिनां
शैस्त्रयोऽयनराशयस्तदेष्टक्रान्त्या किमित्यनुपातेनायनराशयस्ते क्रान्त्यभावस्थानादागताः। अये स्थितास्तु बलाभा
वस्थानादिति सौम्यगोले सूर्यभौमगुरुशुक्राणामयनराशीनां त्वधिकत्वात्त्रिषु योज्यता याम्येऽल्पत्वात्त्रिषु शुद्धयः।

ग्रौ.म शनीन्द्वोस्तु याम्ये योज्याः सौम्ये शोध्या बुधस्योभयतोऽप्युपचयात्त्रिषु योज्यास्ततो यदि षडयनराशिभीरूपं तद्देष्टैः
३८ किमित्यायनं बलं स्यादिति युक्तम्। अत्र भगवता पराशरेण शिष्यानुकम्पया प्रतिगृहमयनभागार्द्धं प्रसाध्य प्र
थमं द्वितीयाद्द्वितीयं तृतीयाद्पास्य त्रीणि खण्डान्युक्तानि। ततोऽनुपातेनायनभागसाधनं चोक्तमिति सर्वमनव
द्यम्। नहि निरवयवद्वादशांशमिता क्रान्तिरेकराशौ भवतीति किंचित्स्थूलमिदं कल्पान्तरत्वाद् दोषः। यदि षण्मि
तायनराश्यंशैः खाष्टेन्दुप्रमितैः षष्टिकलातुल्यं बलं तद्देष्टैः किमित्यत्रापवर्तनेनायनराशिभागानां त्रिभागः षष्ठ्यं
शाद्यं बलमिति जातम्। अतोऽयुक्तमुक्तं भागीकृत्य त्रिभिर्भक्तमिति। परक्रान्त्यात्र योऽयनराशयस्तद्देष्टैः किमिति
प्राग्दर्शितेऽनुपाते त्रिभिरपवर्तं कृत्वाऽतिसूक्ष्मं प्रकारान्तरं पद्धतिप्रकाशे मयोक्तम्। क्रान्तिभागगज ८ भाप्तलब्ध
भाद्येन संस्कृतगुणाः षडुद्धृताः॥ आयनं बलमिदं भवेन्मुनिस्त्वेवमेव हि पराशरोजगौ॥ १॥ पराशरोक्तप्रकारेण
जिनांशमितायामेव परक्रान्तौ संपूर्णबलमागच्छतीति स्पष्टक्रान्तिवशादायनवीर्यसाधनं सूर्यादिकृतं नितरामयु
क्तमिति सिद्धान्तः। किंच। एकत्र निर्णीतः शास्त्रार्थः सर्वत्रोपयुज्यत इति यायनबलवासनासैवायनवलनस्येत्याय रामः
नवलनानयने सिद्धान्तसुन्दरे त्वत्पित्राज्ञानराजेन स्पष्टक्रान्तिर्नादृताऽथ चटीकायां त्वत्सहजेन चिन्तामणिनापि न। ३८

दृतातस्ताभ्यांसह विरोधोपि महद्दूषणम्। तस्मात्क्रूरंसंस्कारोत्रायुक्त एव। अतएवायनवशेनवलनमायनव
लनमितिप्रसिद्धेरयनसंकेतस्योदेशपागयनेमृगकर्किणोरितिचकृतत्वाच्चरसंस्कारोनयुक्तएव। एवंजा
तकपद्धतावायनवलेपिबोध्यम्। एकत्रनिर्णीतःशास्त्रार्थः सर्वत्रोपयुज्यत इत्यायनशब्दस्यतत्रापिसत्वादि
तिवार्तिककृदुक्तिरपिसंगच्छते। क्रान्तिसाधनेनशिष्याः क्लिश्येरन्नितितांविनाप्यायनवलानयनंपद्धतिप्रका
शेमयोक्तम्। अन्यच्चायोः सायनभादिकस्यकोट्युत्क्रमज्याङ्घ्रि ४ तदूनषष्टिः॥ गोलक्रमाद्व्यस्तमथापरे पां
याम्येतुचान्द्रेः स्वरसम्भुतंवा॥१॥ अत्रकोट्युत्क्रमज्यास्वार्क १२० त्रिज्याप्रमाणेनग्राह्येत्यभिसंधिः। शेषंस्पष्ट
म्। वासनातु। यदित्रिज्यातुल्ययासायनग्रहदोर्ज्ययाजिनज्यातुल्यापमज्यालभ्यतेतदेष्टयाकिमिति जाताक्रा
न्तिज्या। इयंद्विभक्ताक्रान्त्यंशाभवेयुः। तेचपञ्चगुणाश्चतुर्भक्ताः फलंपूर्णगुणेषुसंस्कार्यंतदायनंभवतीति
प्रागुक्तम्। अत्रगुणघातोगुणः २४ ३।४५ हरघातोहरः ९६० एतौगुणेनापवर्त्यस्वल्पान्तरत्वाद्धरेचतुरोगृहीत्वा
दोर्ज्याङ्घ्रिसंस्कृतात्रिंशदायनवलमितिपर्यवसितम्। तत्रयानीन्दोः सौम्यगोलेयोगोन्तरंतुल्यहरांशकाना
मिन्दुकेदोर्ज्याचतुर्थांशस्त्रिंशत्सुसमच्छेदविधानेनशोध्यः। समच्छेदंतुकृतस्वगुणस्थानेत्रिज्याजाता। ततोदो

ग्रै.म. ज्यांशोधिता जाता कोट्युत्क्रमज्या। यतो भुजज्योना त्रिज्या कोट्युत्क्रमज्येति सिद्धान्ते प्रसिद्धतरम्। तस्मात् कोट्युत्क्र-
३९ मज्याद्विघ्नस्तुल्यं सौम्ये बलमिति युक्तम्। याम्ये तु दोर्ज्याद्विघ्नत्रिज्याचतुर्थांशे योज्यस्तत्र दोर्ज्यायाः खण्डद्वयम्।
एकं कोट्युत्क्रमज्यातुल्यमृणगतम्। अपरं त्रिज्यातुल्यं तत्र त्रिज्याद्वययोगश्चतुर्भक्तो जाता षष्टिः। अतः कोट्युत्क्रम
ज्याद्विघ्नूना षष्टिर्बलमित्युपपन्नम्। शेषं सुगमम्। प्रकृतमनुसरामः। अर्कस्य दृग्घ्नमित्यत्रोपपत्तिः सारावल्याम्।
सूर्येन्दू पुनरुत्तरेण बलिनौ सत्योक्तचेष्टाबले। सूर्य उत्तरेणायनेन गमनेन चेष्टामूलकबलवान्। परमोत्तरगम
ने रवेरत्र विपुलतेजस्त्वलक्षणचेष्टाशालित्वात् पूर्णबलम्। दक्षिणगमनसमाप्तौ विपुलमन्दतेजस्त्वलक्षण
चेष्टाभावशालित्वाद्बलाभावः। गमनक्रान्तिवशादेवेति क्रान्त्या अनुपातेन्याय्ये आयनवीर्यं तुल्यमेवेदं चेष्टाबलं
जातमतो रवेरायनवीर्यं द्विघ्नं कृतं तद्युक्तमेव। अयनस्य गमनक्रियारूपस्य चेष्टाशब्दवाच्यत्वादिदमपि चेष्टाब
लमेवेति विज्ञेयम्। अथ भौमादीनां द्वितीयं चेष्टाबलं वृत्तार्द्धेनाह ॥ ॥ मध्यस्पष्टयुतेर्दलोनितचलं चेष्टाख्य
केन्द्रं कुजात्स्यात्तच्चेद्भगणाच्च्युतं षडधिकं षड्हृच्च चेष्टाबलम् ॥ ॥ मध्यस्पष्टग्रहयोर्योगार्द्धेनऊनि राम:
तचलं शीघ्रोच्चं कुजमारभ्य चेष्टाकेन्द्रं स्यात्। तच्चेत्षड्राशिभ्योऽधिकं तदा द्वादशराशिभ्यो विशोध्यं ततः षड्भक्तं ३९

सचेष्टाबलं स्यादित्यर्थः। चशब्दोऽत्र तुङ्ग॰ वीर्यानयने यो भजनविधिः स एवावधार्य इति ज्ञापनार्थम्। मध्यस्पष्टवि
वृद्धिहानिदलभाज्यध्योनशैघ्र्यं कुजादिति पाठे व्याख्या। मध्यात्स्पष्टस्याविवृद्धिराधिक्यं हानिर्न्यूनता वा तयोर्दलं भ
जतिसतथासचासौ मध्यश्च तेन ऊनं शैघ्र्यमुच्चं कुजाच्चेष्टाकेन्द्रं स्यात्। एतदुक्तं भवति। मध्यस्पष्टयोरन्तरं कार्यं त
दर्द्धं मध्ये संस्कार्यं यदि मध्यात्स्पष्टोऽधिकस्तदान्तरार्द्धं मध्ये देयमन्यथा हेयमिति। तादृशो मध्यमश्चलोच्चाद्बो
ध्यश्चेष्टाकेन्द्रं स्यात्। अस्मात्पाठात्प्राक्प्रदर्शित एव पाठो वरीयान् गणितलाघवात्सत्वरमथीव बोधाच्च। आचा
र्येणापि स्वकृतटीकायां मध्यस्पष्टयुते द्विलोनितमिति पाठो लिखितोऽस्ति। अत्र मध्यस्पष्टयोगे द्वादशाधिके द्वाद
शभिस्तक्षणं न कार्यमिति बोध्यम्। अत्रोपपत्तिर्बृहज्जातके। उदगयने रविशीतमयूखौ वक्रसमागमगाः परि
शेषाः॥ विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः॥ वक्रसमागमगाः समागमः संबन्धस्तेन व 39
क्रसंबन्धं प्राप्ता वक्रगा इति यावत्। परिशेषा भौमाद्यश्चेष्टाबलयुताः स्युर्येतौ विपुलकरा विपुलबिम्बा इति
यावत्। लघुजातके। वक्रेऽन्ये स्निग्धविपुलाश्चेति। समागमपदं स्पष्टं वोक्तं तेन। वक्रगास्तथा समागमगाश्चन्द्र
सहिता बलिन इत्युत्पलव्याख्या न साध्वी। अत्र विपुलकरा इति चेष्टितवीर्ययुता इति वचनादस्य बलस्यावस्य

चेष्टैवमूलम्। सा च चेष्टा परमविपुलविम्बतारूपा परमवक्रगतिस्थाने षड्राशितुल्ये चलकेन्द्रे शून्यसमे शीघ्रके
४० न्द्रे परमसूक्ष्मविम्बतारूपश्चेष्टाभावः। अतः शीघ्रकेन्द्राण्येव चेष्टाकेन्द्राणि षड्राशितुल्ये शीघ्रकेन्द्रे रूपं संपूर्णवि
ले शून्यतुल्ये बलाभावः। अन्तरा तु यदि षड्राशितुल्येन चेष्टाकेन्द्रेण रूपं बलं तदेष्टषड्लव चेष्टाकेन्द्रेण किमित्यनु
पातेन बलानयनं युक्तम्। अत्राचार्यैः शीघ्रकेन्द्राण्येव चेष्टाकेन्द्राणीति सुगमं विहाय मन्दफलदलार्द्धसंस्कृतम
ध्योनं चलोच्चं चेष्टाकेन्द्रं स्यादित्यङ्गीकृतं तत्रोपलब्धिरेव वासना। अथ फलद्वयार्द्धसंस्कृतमध्येनोनं चलोच्चं किल
चेष्टाकेन्द्रम्। तत्र प्रकृते फलद्वयमज्ञातं तत्साध्यते। मध्यस्फुटान्तरं फलद्वयम्। यतो मध्यः फलद्वयसंस्कृतः स्पष्टो
भवति। तदर्द्धेन संस्कृतो मध्यश्चलोच्चाच्छोध्यश्चेष्टाकेन्द्रं स्यात्। अतो मध्यस्पष्टविवृद्धिहानिदलभागित्याद्युपपन्न
म्। यद्वा। विपरीतफलद्वयार्द्धसंस्कृतचलोच्चादेव मध्यः शोध्यश्चेष्टाकेन्द्रं भवति। तथा च श्रीपतिः॥ मध्यस्पष्टद्युचरवि
वरार्द्धेनयुक्ताच्चलोच्चान्मध्ये स्पष्टादधिकवपुषि न्यूनके वर्जिताच्च। जह्यान्मध्यग्रहमिति च भवेत्तच्च चेष्टाख्यकेन्द्र
मिति। अत्र जह्यात्स्पष्टग्रहमित्यपपाठः। बहूनामसंमतत्वात्। अत्राचार्यैः क्रियोपसंहारं कृत्वा मध्यस्पष्टयुतेरिति रामः
पाठान्तरमुक्तं तत्र युक्तिर्मध्याधिके स्पष्टे तावदुच्यते। मध्योनः स्पष्टः फलद्वयं तदर्द्धं फलद्वयार्द्धं जातमेतम [illegible] ४०

न्मध्ये समच्छेदविधानेन योजितं जातं मध्यस्पष्टयोगार्द्धम्। म॰ स्प॰ यो शु॰ अतो मध्यस्पष्टयुतेर्दलमित्यनेन फलदूया
र्धसंस्कृतो मध्य इति साधितं भवति। एवं मध्योनस्पष्टयोज्यम्। अनेन हीनं चलोच्चं चेष्टाकेन्द्रं स्यादत्र किं चित्रम्। अतः सर्वमुपप
न्नम्॥ इदानीं निसर्गबलमाह॥ ॥ स्यादेकोत्तररूपमद्रिविहृतं नैसर्गिकं स्याद्बलं मन्दारज्ञसुरेज्यशुक्र
शशभृत्तीक्ष्णद्युतीनां क्रमात्॥ १० ॥ स्यादिति पूर्वेणान्वयः। एकोत्तरं रूपमद्रिविहृतं सप्तभक्तं सत् मन्दादीनां
क्रमान्नैसर्गिकं बलं स्यात्। एकेनोत्तरोऽधिको यस्य तत्तथा। तच्च तद्रूपं च एकोत्तररूपम्। एकादिसप्तान्ता अङ्काः स
प्तभक्ता नैसर्गिकं बलं स्यादिति निष्कृष्टोऽर्थः। अत्रोपपत्तिर्बृहज्जातके। शकबुगुशुचन्द्रार्का वृद्धितो वीर्यवन्तः। अत्र
शादिभिराचार्यैरुपलक्षिताः शन्याद्या ग्रहा वृद्धितो बलिनः स्युः॥ अत्र सर्वापेक्षया रवेः संपूर्णबलं संपूर्णतारू 40
पात्मिकेति रूपं बलम्। अतो रूपसप्तमांशः शनेर्बलमेवं सप्तांशोपचयाद्भौमस्य सप्तांशद्वयमेवं बुधादीनां निसर्ग
बलमुपपन्नम्। एतद्बलं कदापि न क्षीयते नाप्युपचीयते सर्वदा सममेवेति नैसर्गिकबलमित्यस्य नाम्नः तत्परा
शयः। नैसर्गिकं स्वाभाविकमिति यावत्। अत्र पुस्तकेषु स्यादेकोत्तररूपमित्यस्यार्द्धस्य पूर्वं बाणवियोगहृदि
त्यर्द्धस्याकुलिखनं लेखकभ्रमजं द्रष्टव्यम्। अन्यथा सभेदस्य चेष्टाबलस्या[illegible]भिधानानन्तरमेव निसर्गबलाभिधा

ग्रै·म· नेऽर्थान्तरंस्यात्।यद्वायोद्धबलस्यकादाचित्कत्वाद्ग्रहयोर्वियोगेचेष्टाबलंतत्तुल्यंभवतीतितस्यचोक्तत्वान्निसर्गब
४१ लमुक्तमितिनकिंचिद्विरुद्धम्।अथयुद्धजबलाख्यंभौमादीनांतृतीयचेष्टाबलमाह॥ ॥ युद्धेबाणवियोगग्रह
त्वचरयोर्वीर्यैक्ययोरन्तरंस्वंसौम्यस्यबलेक्षयंचयमदिक्स्थस्यकुर्याद्बले॥ ॥ खचरयोस्ताराग्र
हयोर्युद्धेसतिवीर्यैक्ययोर्युद्धजबलातिरिक्तसर्वबलैक्ययोरन्तरंरूपादिबाणयोःकलात्मककदम्बाभिमुखश
रयोर्वियोगेनहृद्गतंसद्युद्धबलंस्यात्तत्सौम्यस्यसोत्तरदिक्स्थितग्रहस्यबलेस्वंधनंकुर्यात्।यमदिक्सं
स्थस्यबलेक्षयंऋणंकुर्यात्।गणकइतिशेषः।बाणान्तरंतुसमदिशोःशरयोरन्तरेणभिन्नदिशोर्योगेनभवति।
यस्योत्तरःशरःसउत्तरदिक्स्थोग्रहोदक्षिणशरोदक्षिणदिक्स्थः।दिक्साम्येयस्याल्पशरःसोऽन्यदिक्स्थइति
ज्ञेयम्।ननुकिंनामयुद्धंतच्चकेषांभवतीतिनजानीमइतिचेत्।उच्यते।समागमाभावेसतिस्पष्टग्रहयोराश्यंश
कलासाम्यमेवयुद्धम्।केवलंराश्यंशकलासाम्यमेवयुद्धमित्युक्तेसमागमेपिस्पष्टग्रहयोराश्यंशकलासाम्य
युद्धलक्षणमतिव्याप्तमतस्तद्वारणायसत्यन्तम्।भिन्नराशिस्थत्वेपिसमागमाभावाद्युद्धलक्षणंमाप्रसाङ्क्षी राम:
दितिराश्यंशकलासाम्यमित्युक्तम्।नन्विदंलक्षणमयुक्तम्।परमास्तमयेसमागमाभावेसतिस्पष्टग्रहयोश्चन्द्रा ४१

द्विग्रहान्यतरसूर्यग्रहयोराश्यंशकलासाम्यस्य सत्वेनातिव्याप्तेः। सूर्येणास्तमयः सहेति सूर्यसिद्धान्तोक्तिविरोधा
च्च। तस्मात्समागमपरमास्तमयाभावकालीनस्पष्टग्रहराश्यंशकलासाम्यमेव युद्धमिति वाच्यम्। तथासतिनक्षा
प्यतिव्याप्तिः। नच घटसत्वेपि घटपटौ नस्त इति प्रतीतेर्व्यासज्यवृत्तिप्रतियोगिकोभावोऽवश्यं स्वीकरणीयः॥
तथाच समागमे समागमाभावाभावेपि समागमपरमास्तोभयाभावादेवं परमास्तमये परमास्तमयाभावाभावे
पि समागमपरमास्तोभयाभावाद्राश्यंशकलासाम्यात्मकयुद्धलक्षणं तत्राप्यतिव्याप्तमिति वाच्यम्। समागमस्य
परमास्तमयस्य च प्रतियोगिनः सत्वेन तत्र तदभावानभ्युपगमात्। तथासति पूर्वलक्षणमसंगतमिति चेत्। मै
वं वाचः। स्पष्टग्रहयोरित्यत्र भौमादिपञ्चकान्यतमयोः स्पष्टग्रहयोरित्यर्थस्य विवक्षितत्वात्। परमास्तमये स
मागमस्यासिद्धत्वाद्विम्बयोर्निषेद्धुमशक्यत्वाच्च। समकलयोस्ताराग्रहयोः सूर्यसांनिध्यवशेनास्तमये युद्ध
शङ्कायां सदासार्थमस्ताभावकालीनमिति विशेषणं देयम्। केचिदायनदृक्कर्मग्रहे युद्धमित्याहुस्तद्वारणाय वा
स्तवपदमपि देयम्। तथाच समागमास्ताभावकालीनं भौमादिपञ्चकान्यतमयोर्वास्तवस्पष्टग्रहयो राश्यंश
कलासाम्यमेव युद्धमिति फलितम्। ननु भेदयोगान्ययोगे दृक्कर्म देयमित्युक्ते दृक्कर्मदानमावश्यकं तथा स

प्रौ·म· तिनदेयमितियदुक्तं तदयुक्तमिति चेन्न। यद्यप्यकृतेपि दृक्कर्मणि युतिः साध्यतेऽपि भवतीति भाष्ये भास्कराचार्यै
४२ रुक्तत्वात्। परं सा युतिराप्याति साकदम्बाभिमुखी लोके कदम्बप्रसिद्धतारयोरभावाद्दृष्टः प्रतीतिर्नातस्तद्युति
तत्र दृक्कर्म देयमेव। प्रकृते तु बलानयने दृष्टः प्रतीतेरनपेक्षितत्वाद्दृक्कर्म व्यर्थम्। अत एवाहुर्मिश्राः। बास्तवस
ष्टखेटानामिति। चन्द्रादीनां सूर्येण संयोगोऽस्तमनसंज्ञः। भौमादीनां चन्द्रेण संयोगः समागमशब्दवाच्यः। भौमा
दीनां परस्परसंयोगः कदाचित्समागमः कदाचिद्युद्धम्। तदुक्तं सूर्यसिद्धान्ते। ताराग्रहाणामन्योन्यं स्यातां युद्ध
समागमौ॥ समागमः शशाङ्केन सूर्येणास्तमयः सहेति ताराग्रहाणां ताराकाराणां ग्रहाणां भौमादीनां पञ्चानां यु
द्धं समागमश्च द्वावेतौ भवतः। तत्र युद्धभेदाश्चत्वारः। तथा च वराहः। आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनास
व्यैः॥ युद्धं चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम्। लक्षणानि सूर्यसिद्धान्ते॥ उल्लेखस्तारकास्पर्शे भेदे भेदः प्रकी
र्त्यते॥ युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम्॥१॥ अंशादूनेपसव्याख्यं युद्धमेकोऽत्र चेदणुरिति॥ अंशादूनेऽन्तरे स्य
ताद्वावपि स्वल्पबिम्बौ तदा कूटविग्रहाख्यो भेदः। अयमपि भेदः पराशरेणापसव्याख्यभेदान्तर्गत एव कृतः। अंरामः
शादूनेऽन्तरे उभावपि पृथुबिम्बौ तदा समागम एवापसव्याख्ययुद्धम्। अत एव तत्रोक्तम्। आसन्नावप्युभौ दीप्तौ ४२

भवेतस्तौ समागमेइति॥अंशाधिकेन्तरेयदाद्वावपिपृथुबिम्बौतदासमागमएवनकूटविग्रहः॥समागमांशादधि
केभवतस्मिइत्यान्वितौइति॥अत्रबलशब्देनस्थानादिबलंनग्राह्यं किंतुबिम्बस्थौल्यरूपंरूपबलमेवग्राह्यमिति
ब्रह्मसिद्धान्तेउक्तम्।स्थानादिबलचिन्तात्रव्यर्थाकेनापिनस्मृता॥प्रश्नत्रयेप्यवाप्यस्मिन्स्थौल्यसौक्ष्म्यबलंस्मृतमि
ति।सूर्यसिद्धान्तटीकायांचोत्पलभट्टेनाप्येवमेवव्याख्यातम्।अंशादधिकेन्तरेयदाद्वावपिस्वल्पौतदाकूटविग्र
हएवनसमागमः।अंशान्न्यूनेन्तरेपियदाद्वावपिस्वल्पौतदाकूटविग्रहएव।अतएवाविशेषेणोक्तम्।स्वल्पौद्वाव
पिविध्वस्तौभवेतांकूटविग्रहइति फलितोयमर्थः।तारकास्पर्शनिमित्तेउल्लेखाख्यंयुद्धं तारकाभेदनिमित्तेभे
दाख्यंयुद्धम्।अंशुयोगनिमित्तेंशुविमर्दाख्यंयुद्धम्।अंशादूनान्तरयोर्ग्रहयोरेकस्याणुत्वेनिमित्तेऽपसव्याख्ययु 42
द्धं द्वयोरणुबिम्बत्वेकूटविग्रहाख्यंयुद्धं द्वयोःपृथुबिम्बत्वेनिमित्तेसमागमएवनयुद्धम्।अन्यथायुद्धसमाग
मसंकरइतिभौमादिपरस्परयोगस्यसप्तभेदाभवन्तीत्याहुर्वासनावार्तिकप्रणेता[illegible]त्मलितवरणनृसिंहदैव
ज्ञाः॥इदमत्रावधेयम्।शरयोगवियोगात्मकेग्रहान्तरेमानैक्यखण्डतस्तेतारकास्पर्शस्तन्न्यूनेतारकाभेदोमा
नैक्यार्धादधिकें शार्धान्न्यूनेंशुविमर्दः।आरादंशार्धमंशूनांव्याप्तिरितिब्रह्मसिद्धान्तोक्तेः।ग्रहान्तरेअंशादधिकेंशा

ग्रै. भा. दूते सत्येकस्याणुत्वे पसव्याख्यं युद्धं द्वयोरणुत्वे कूटविग्रहाख्यम्। अंशादूने ऽधिके वान्तरे द्वयोरणुत्वे कूटविग्रहो
४२ द्वयोः पृथुबिम्बत्वे समागम एव। शीघ्रकर्णे त्रिज्याधिके ऽणुबिम्बत्वं त्रिज्याल्पे पृथुबिम्बत्वमिति। अत्र युद्धप्रदेशा
दानां समागमादीनायं संस्कार इति बोध्यम्। एवं त्र्यादीनामपि युद्धे द्वयोर्द्वयोर्ग्रहयो[illegible]दृक्बलव्यतिरिक्तसर्वबले
कयोरेवान्तराद्ग्रहान्तरेण फलमानीय यथोक्तवत्संस्कारः कार्यः। अत्र ग्रहे आयनदृक्कर्मशरेनतिसंस्कारस्तद
नुपयुक्तत्वाद्युचरविशिखस्तोडिर्कास्तज्यया प्रदूस्तनैन स्पष्टता च न कार्या। प्रयोजनाभावात्। अथोपपत्तिरुच्यते। बृ
हज्जातके। विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्या इति। परिशेषादित्यनुक्तेः रवीन्द्वोश्चेष्टा
बलस्योक्तत्वात् परिशेषाद्भौमादयो युद्धे उत्तरसंस्थाश्चेष्टाबलयुताः स्युः। यतो विपुलकराः। विपुलकरा इति चे
ष्टाबलहेतुभूतचेष्टोपन्यासः। ग्रहयुतावुत्तरस्यस्य जयवशाच्चेष्टाधिक्यं दक्षिणस्यस्य पराजयवशाच्चेष्टाह्रासस्त
दिहोत्तरस्यस्य जयवशाद्बले यावदाधिक्यं तावानेव पराजयवशाद्दक्षिणस्यस्य बले ह्रास इति सिद्धम्। केनचिद्दक्षि
णस्यस्यापि जय उक्तस्तन्मतमत्र न गृहीतं। बृहज्जातके उत्तरसंस्था इति विशेषोक्तेः। अथ लोके समे ऽपि योगे यः राम:
पराजयो नास्ति। तयोरेकस्य षष्ट्यंशमात्राधिक्ये स्थूलदृष्ट्या साम्ये ऽपि सूक्ष्मदृष्ट्या षष्ट्यंशमात्रो जयः पराजयश्चास्ति ४२

नि बलान्तरतुल्योजयः पराजयश्च पर्य्यवसितः। बलं त्वत्र सामान्याकारेण सर्वमेवागतं परंतु बलानन्तरयोर्जयप
पराजयविचारस्य प्राप्तत्वादितरेतराश्रयभीत्यैतदतिरिक्त सर्वबलैक्ययोरन्तरं बहुयुद्धे पिन्यास्य म। यदत्र भणे शे
न पूर्वं प्रदिष्टबलसंकलनं विदित्वेति वदतानन्तरं प्रदिष्टं दृग्बलं न योजितं तदतीव तुच्छमित्यवगच्छ। अत्र सर्वेषां
कलापर्यन्तमेव धारणात्कलातोऽल्पे ग्रहान्तरेऽन्तराभावलक्षणं साम्यमेवेति मिश्राः प्राहुः। ततोऽत्र पद्धतौ यत्र कलाव्य
वहारस्तत्र स्फुटग्रहयोः साम्ये शरसाम्ये चैककलातोऽल्पेऽन्तरे साम्यमेवेति फलितम्। एवं सति बलानन्तरतुल्यः परमो
जयः पराजयश्च युद्धस्यान्तरमोत्कर्षपरमसंनिध्ये शरयोरन्तराभावलक्षणे साम्ये समुचित [illegible] शरयोरेक
कलातोऽल्पेऽन्तरे यथोक्तान्तराभावलक्षणसाम्याद्याम्योदक्स्थत्वव्यवहाराभावेन ज[illegible]संस्काराभावराव।
ततः शरयोः कलामात्रान्तरे याम्योदक्स्थताप्रवृत्तेस्तत्र बलान्तरतुल्यो जययोज[illegible]श्च। अ[illegible]पातः। यदि कलामात्रेण
ग्रहान्तरेण बलान्तरतुल्यं बलं प्राप्यते तदैककलादिना ग्रहान्तरेण किमिति। अत्र सा[illegible]पक [illegible]दिक्ता
वृद्धौ फलं ह्रासादिति व्यस्तत्रैराशिकेण बलान्तरस्य कलादिग्रहान्तरं हरः फलमुदक्स्थस्य जयोक्तेस्तरा[illegible]पुक्तं
णस्थस्य पराजयोक्तेस्तद्बले हीनं कर्तव्यमिति युक्तम्॥ एवं सभेदं चेष्टाबलमत्रस्याप्येदानीं दृग्बलं 43

प्रौ·म· ॥ ४ सदृष्ट्यङ्घ्रियुगग्रदृष्टिचरणोनंखेटवीर्यंभवेत् ॥ ॥ प्रागानीतंवीर्यंसर्वांशुभग्रहाणां … दृ
४४ ष्टीनः … णाचतुर्थांशेनरूपादिनायुक्तयुक्तंकार्यम्। उग्राणांपापानांदृष्टिचरणोनंकार्यम्। एवंकृते … तरवेट
वीर्यंभवेत्। जातावेकवचनम्। तेनखेटवीर्याणिभवेयुरित्यर्थः। यद्वाशुभदृष्टियो… पादहृष्टियोगचतुर्थां
शयोरन्तरं … रवीर्यंस्यात्। शुभदृष्टियोगचतुर्थांशस्यापदृग्योगतुर्यां… शुद्धेशेषं … गतंदृग्बलमितरथ णो
मितिविद्यम्। ततः षष्ठ… बलानांयोगकृते षड्भक्तंतदेवात्रसर्वत्रबलशब्दे… अवक्षिप्यते। … पापाभिः। लघुजातके
बलवान्मित्रस्वगृहोच्च… सितः शुभैश्चापि॥ शुभैर्दृष्टोग्रहोबलवान्यास्यापदृष्टोनिर्बल… अत्रेन्दोः सर्वदे
वशुभत्वाद्बुधस्यचशुभत्वेचत्वारः शुभाः स्युः पापत्वेचत्वारः पापाः। यदिचत्वारः शुभाः पापावा … संपूर्णदृष्ट्याप
श्येयुस्तदारूपतुल्यं … बलंधनमृणंचक्रमेणोचितम्। अतोऽनुपातः। यदिचतूरूपमितयासर्वदृष्ट्यारूपंतदाने
नदृष्टियोगेनकिमितिशुभदृग्योगस्यपापदृग्योगस्यचचतुर्थांशः क्रमेणधनर्णंदृष्टिबलमितिनिष्पन्नम्॥ ॥ इदानीं
भावानांत्रिविधबलमाह॥ ॥ भावानांबलमीशजंचनृचतुष्पादाख्यकीटाम्बुजाः॥११॥ ऊ… स्वभो रामः
निताः खलुततोदिग्वीर्यवच्चयुतंसदृष्ट्य… युगग्नदृष्टिचरणोनंज्ञेज्यदृग्युक्तुनः॥ ॥ अस्यार्थः… ४४

र्यार्थः। भावानां स्वामिब लमेव बलमेकम्। च पुनर्नृ चतुष्पाद् आख्यकीटाम्बुजाः। नरचतुष्पाद्कीटजलचरराशयो भ
वा[illegible]न चतुर्थे तनुदशमभावे हृ नीताः यदि षड्भाधिकास्तदा चक्रस्य दुः १२ षड्भाल्पाय्यास्थिता[illegible]पा[illegible]ः फ
लं दिग्बलं द्वितीयम्। अनेन दिग्बलेन स्वामिबलं युतं कार्यं सबलहू मयोग[illegible]भवेत् शुभग्रहदृष्टियोगश्चतुर्थांशपापदृ
गैक्य चतुर्थांशयोरन्तरं प्राग्वद्धनमृणं दृग्बलम्। तद्बुधस्य गुरोश्च समग्र[illegible]याद दृशा युतं कार्यम्। यदि [illegible]हवत्साधितं दृ
ग्बलं धनगतं तदा त[illegible]नबुधगुरु[illegible]दृष्टियोगो योज्यः चेदृणं तदा बुधगुरुदृग्योगेन सहान्तरं कार्यं शेष[illegible]दृग्बलं स्यात्।
दृढं तु [illegible]म[illegible]वाणां यो[illegible]वस्य बलं स्पष्टं भवति। अत्र मतस्यानिप इति प्रकाशे। अथ त्रिधा[illegible]यदा मिस्वस्वा
मिवीर्यबलमुक्तमेकम्। नभोगवहृष्टिबलं द्वितीयं समग्रचान्द्रीज्यदृगैक्य[illegible]कम्॥१॥ धन[illegible]सा[illegible]दृग्गुरुदृष्टि 44
[illegible]पा[illegible]ैक्य धनयोस्तु योगः॥ धनर्णयोरन्तरमेव योगस्त्वेवं विदित्वा युतिर[illegible]कार्या॥ [illegible]कीटपश्चस्वचराणि भा
निजा[illegible]वृषेभमाम्बरभोनितानि॥ यथा षडल्पानि लवीकृतानि त्रिभिर्विभक्ता[illegible]तानि॥२॥ अत्रोपपत्तिः॥
सा[illegible]वस्याम्। लग्नाधिपेन तुल्यं बलमिह चूडामणिर्वदति। लग्नमित्युपलक्षणं तेन[illegible]वशाबलमेवमाव[illegible]मित्य
र्थः [illegible]तोऽयुक्तमुक्तं भावानां बलमीशजमिति। नरचतुष्पदादिराशयः केन्द्रे चकस्यादिशि बलिन इति म[illegible]गर्गो

प्रौ॰ म॰ योक्तम्॥ नृयुक्तुला घटः कन्या पूर्वमर्द्धं च धन्विनः॥ लग्नस्था बलिनो नित्यमेते हि नरराशयः।१। चतुर्थे कर्क [illegible] मीनो
४५ मकरार्द्धं च पश्चिमम्॥ विज्ञेया बलिनो नित्यमेते हि जलराशयः।२। सप्तमे वृश्चिकः [illegible] नवा [illegible] कीर्तितः॥ धन्व
पूर्वार्द्धं मेषसिंहौ बलिनः खे चतुष्पदाः।३। इति। अत्रार्द्धशब्देनावशिष्टो मकरपूर्वार्द्धो बो [illegible] र चतुष्पदादिराशीनां
प्रोक्तदिशि संपूर्णं बलं ततः सप्तमे बलाभावस्तदन्तरे ऽनुपातेन बलानयनस्य व्यवहारदिग्ब [illegible] शस्या। अत्र गणेश
नाम्नोक्तं [illegible] मकरार्द्धमानुष [illegible] र्द्धं चतुष्पदमित्युक्तम्। अन्येन तु संपूर्णः कुम्भो जलचर इत्युक्त [illegible] यमपि गर्गप
राशरादिविरोधात्त्रक [illegible] त्येयम्॥ किंच। पराशरेण कर्कवृश्चिकौ कीटावित्युक्तं तदपि नादरणीयं [illegible] नामसंमत
त्वात्। कर्को जलचरो वृश्चिकः कीट इति सर्वसंमतम्। अथ शुभदृष्टो राशिर्बलवान्पापदृष्टो न बलवानिति शुभदृष्टेः
पापदृष्टेश्चतुर्थांशो योज्यो वियोज्यश्च क्रमेणेदं प्रागुपपादितमेव। बुधजीवनिरीक्षितो राशिर्बलवानिति लघुजात
कादेर्बुधजीवदृष्टे विशेषेण पुनरुपात्तत्वात्समग्रबुधदृष्टौ संपूर्णजीवदृष्टौ च संपूर्णरूपं बलमिति [illegible] ब
ले जाते गणितागतया सकलया बुधदृष्ट्या जीवदृष्ट्या च युतं कार्यमिति सर्वं परिच्छिन्नम्॥ यच्च। नरराशीनां गुरुशुक्र रामः
योस्त्रिकोणत्वं बुधस्य च गृहत्वमिति प्रत्यक्षसिद्धमेवातस्तेषां रूपं बलं वृश्चिकराशौ बलाभावः। पयोनीचत्वाच्च ४५

द्रस्य बलशून्यत्वमित्यादियुक्तिमन्दानन्दकरी सूर्येण गर्गादिमुनिग्रन्थापटुनाम्नी पद्धतिपद्धतिवृत्तौ प्रतिपादितास
नितरामयुक्तेति बोध्यम्। वृश्चिके चन्द्रस्य बलाभावाल्लग्नस्यापि बलाभावेन भाव्यमिति यो ब्रूयात्तत्कथोपहास्यो न स्या
त्। यद्यत्र मम एव प्रमाणं तदा किमनेन वृथा युक्तिलिखनेन। अत्र शास्त्रे सर्वत्रागम एव प्रमाणं तथापि सद्युक्तिश्चे
त्स्फुरिता सा लेख्या। तस्मादार्षग्रन्थानभिज्ञानां यत्किंचिद्युक्तिं प्रतिपादयतां तत्प्रकरणव्यसनमायुष्मतां वृथैव॥ ॥
अथोत्तरार्द्धेन रवीन्द्वोश्चेष्टाबलसाधनमाह॥ ॥ स्वर्केन्दुस्त्रिभयुक्तसायनरविश्चेष्टाख्यकेन्द्रे तयोर्गोकष्टे
ष्टविधौ बले कुरु ततः प्राग्वन्नवीयीयते॥१२॥ सूर्येणश्चन्द्रश्चन्द्रस्य चेष्टाकेन्द्रं स्यात् रा[illegible]येणायनांशैश्च
युतो रविः सूर्यस्य चेष्टाकेन्द्रम्। ततस्ताभ्यां केन्द्राभ्यां प्राग्वद्व्योमादिचेष्टाबलवद्भगणाच्च्युतं षडधिकं षड्ढृ 45
दित्यादिना तयोः सूर्याचन्द्रमसोर्बले कुरु शिष्यनिमन्त्रणे लोट्। कस्मिन्विषये इत्याकाङ्क्षायामाह गोकष्टवि
धाविति। गावो रश्मयः कष्टम् दृष्टं च प्रसिद्धम्। अनयोश्चेष्टाबलयो रश्मीष्टकष्टसा[illegible]ने उपयोगो नास्तीत्यर्थः। नवी
यांबलैक्यकर्तव्ये नोपयोग इत्यर्थः। अत एव बलसमाप्तावेतच्चेष्टाबलमभिहितम्। अत्रोपपत्तिः प्राग्भदाहृ
ते सारावलीवाक्ये रवेरुत्तरायणे चेष्टायाः प्रतिपादितत्वाद्[illegible]गमनारम्भे सायननवराश्यन्ते सूर्यचेष्टाकेन्द्र

पी.म. मा। परमोत्तरगमने सायनराशित्रयान्ते षड्राशिमितं चेष्टाकेन्द्रं तत्तु राशित्रययोगेन भवतीति तयोः [illegible] मूलपरमि
४६ दं स्थूलम्। वस्तुतस्तु गमनस्य क्रान्त्यधीनत्वात्क्रान्त्यनुपातेन प्रागुक्तेन रविचेष्टाकेन्द्रसाधनं न्याय्यम्। तत्का
न्तिभागगजभागलब्धभाद्येन संस्कृतगुणादिस्यनेन यदूषे राशिप्रभृति फलमागच्छति तदेव [illegible] चेष्टाकेन्द्रं [illegible]
स्थूलस्यास्य चेष्टाकेन्द्रस्य ग्रहणे तु चेष्टागुणवैलक्षण्याद् व्याकुषिमासाद्यन्तयोस्तात्पूल मिदं चेष्टाकेन्द्रमसदे
वेति सुन्दरोक्तः पन्था नितान्तरमणीयः स्वीकरणीयः॥ चन्द्र उत्तरेण बली स्यादेकोत्तरस्य पाभित्यादावुत्तरशब्दस्या
धिक्यार्थत्वादाधिक्येन चेष्टामूलकबलवान्। आधिक्यं तत्पायाद्र्व्यपेक्षया। ततो रवेः षड्भाधिके च [illegible] मविप्रकृष्टे पौ
र्णमास्यन्ते षड्भमितं चेष्टाकेन्द्रं तथामान्ते सूर्यसमे चन्द्रे आधिक्याभावाच्चेष्टाकेन्द्रं शून्यं तच्चव्य [illegible] नैव भवतीति
तयोक्तम्। अतोनुपातेनावान्तरे साधितं बलं शुक्लपक्षबलतुल्यमेवायातीति पूर्वपक्षबलं द्विघ्नमुक्तम्। एतेन द्वि
सप्तकृणे आयनपक्षवीर्ये चेष्टाबलेति मकरादिसंयोः स्तः॥ इतीरितं श्रीपतिना नितान्तं न तन्मतं चारुविचारयुक्त्ये
ति रत्नावलीकारमतमपास्तम्। अतो रवीन्द्वोश्चेष्टाबले प्रागेव योजितत्वान्न वीर्यायभवतदिति सर्वं सुगमम्। इ रामः
हज्जातकेपि। उदगयने रविशीतमयूखौ चेष्टितवीर्ययुतौ परिकल्प्यौ विल्समत्र चन्द्रपक्षे उदकृपदपर्यायोत्तरपद ४६

वान्यत्वसंबन्धेनाधिक्यार्थेलक्षणास्वीकर्तव्या। सर्वेगत्यर्थाः प्राप्त्यर्थास्तदयनेप्राप्ताद्इतियावत्। तेनोद्गमनस्य
स्याधिक्यप्राप्ताविव्यर्थेसर्वमनवद्यम्॥ सवासनायांसमकारिवृत्तिर्दिवाकरेणामलकेशवोक्तेः। मितत्वंसंप्राप्तधि
यारवगानांश्रीयोधिकारः समगात्समाप्तिम्॥ ॥ इतिश्रीसांवत्सरवरतरकेशवदैवज्ञकृतजातककर्मपद्धतेष्टी
कायांसवासनायांदिवाकरविरचितायांप्रौढमनोरमाभिधायांबलाध्यायस्तृतीयः॥ ॥ अथेष्टकष्टसाधनाध्यायो
व्याक्रियते। तत्रप्रथमंरवीन्दुचेष्टाबलंयोगीकष्टेष्टविधावुपयोगोस्तीत्युक्तं तत्रकोनामरश्मिः के वेष्टकष्टे इत्युप
स्थितौतदानयनंवृत्तेनैकेनाह॥ ॥ येचेष्टोच्चबलेरसैर्विनिहतेसैकेनिजारश्मयश्चेष्टतुङ्गबलाहतेः प 46
द्मिहेष्टस्याद्वलोनैकयोः। घातान्मूलमिदंहिकष्टमघतद्रूपंदशायाः फलंवीर्यंद्वयरश्मिरिष्टकष्टगु
णितेद्वेष्टकष्टाह्वये॥ १२॥ येचेष्टाबलोच्चबलेसूर्यादीनांप्रागानीतेतेरसैः षड्भिर्विनिहतेगुणितेदलतः सैके
ऊर्ध्वस्थानेरूपसंयुतेसतीनिजाः स्वकीयारश्मयोमरीचयः स्युः। चेष्टाबलाच्चेष्टारश्मयउच्चबलादुच्चरश्मयः स्युरि
त्यर्थः। अत्रोपपत्तिः। स्वोच्चस्थेग्रहेसप्तमरीचयः परमनीचस्थेतुपरमाल्पारूपमितामरं विरत्रागमएवप्रमाणमात्रो
च्चनीचखगान्तरंपरमंषड्राशिसमंनीचेनीचग्रहान्तराभावः। अतोनीचग्रहान्तरतएवरश्मिसाधनंकर्तुमुद्यते। त

ग्री·म· त्रानुपातः। यदि षड्राशितुल्येन नीचग्रहान्तरेण षण्मरीचयस्तदेष्टषट्तुल्यनीचग्रहान्तरेण किमिति। अत्र नीचग्रह
४७ न्तरं षड्भिर्गुणनीयं षड्भिरेव भाज्यमिति जातं। तत्र षड्भक्तं नीचग्रहान्तरमुच्चबलं प्राक् प्रतिपादितमेव। अथ तद्वेष
ड्भिर्गुणनीयं ततो रूपयुतमुच्चरश्मयो भवन्तीति निष्पन्नम्। एवं शून्ये चेष्टाकेन्द्रे पूर्ववदेको रश्मिः। षड्भमिते सप्त र
श्मयः। सद्भावादिष्टकष्टार्थं चेष्टागुणार्थं च कल्पिता न तु वास्तवाः। शेषं सुगमम्। यद्वा। चेष्टोच्चकेन्द्रराशयः सैकाद्वि
गुणांशादियुताश्चेष्टोच्चरश्मी भवतः। तथा च पराशरः। नीचोनं तु ग्रहं भार्द्धाधिकं चक्राद्विशोधयेत्। उच्चरश्मिर्भवे
द्राशिः सैको द्विघ्नांशसंयुतः। चेष्टाकेन्द्रं कुजादीनां पूर्वाध्याये समीरितम्। उच्चरश्मिवदानीय चेष्टारश्मिमिति पूर्वप्रद
र्शितेऽनुपाते षट्तुल्ययोर्गुणहरयोः सत्वात्सर्वमिदमुपपद्यते। चेष्टोच्चरश्म्योर्योगार्धं स्पष्टरश्मयो भवन्ति। तेषां योगो या
संख्या भवति ततः पञ्चेन्दुतो विंशतिरेव यावद्भमस्तयस्ते मनुजं सुशीलमित्यादिजातकफलं निगाद्यम्। तदाह पराशरः
द्वयोर्युतेः दलं तु शुभरश्मिः स्यादिति। अथेष्टकष्टसाधनमाह। चेष्टातुङ्ग· बलाहते रिति॥ अत्र पदार्थः सुगम एवातास्त
यो र्थस्तूच्यते। चेष्टाबलेनोच्चबलमुच्चबलेन चेष्टाबलं चोच्चावचजनप्रसिद्ध्या खण्डगुणनात्मिकया गोमूत्रिकागु रामः
णनरीत्या गुणनीयम्। तस्य मूलमिष्टसंज्ञम्। चेष्टाबलोनरूपतुङ्ग· बलोनरूपयोर्घात तस्य मूलं कष्टं स्यात्। अत्रेदं त ४७

त्वम्। बलघातस्य बलोनरूपघातस्य वा यस्य मूलं ग्रहीतुमिष्टं स त्रिष्ठोपि षष्टिवर्गे ३६००ण गुणनीयः। ततोधःस्थिता
ङ्कात्षष्ट्या भागे लब्धमुपर्य्युपरि संयोज्य यदूर्ध्वस्थाने निष्पद्यते तस्मात्त्यक्त्वान्त्याद्विषमात्कृतिमित्यादिपाटीगणि
तोक्त्या मूलमानेयम्। पुनर्यच्छेषं ततो मूलावशेषकं सैकं षष्टिघ्नं विकलान्वितम्। द्विसंगुणद्वियुक्तेन मूलेनाप्तं स्फुटं
भवेदित्याद्युपरिभाषया मूलं ग्राह्यम्। एवं लब्धं द्विष्ठं पदं षष्टिभक्तं सत्रिंशं मूलमतिस्फुटं स्यात्। तथा च करणकण्ठी
रवे केशवार्कः। यत्षष्टिवर्गनिहतात्पदमभ्रषड्भिर्भक्तं स्फुटं तदिह मूलममूलदस्येति। अत्र बलघातो बलोनरूपघा
तश्च द्विवारं षष्ट्या सवर्णनीयः षष्टिवर्गनिहतघातसमो भवतीति सुगमोपायो वेद्यः। ऊर्ध्वाङ्कः षष्टिगुणोधःस्थाङ्केन 47
युतः पुनरप्येवमेव कार्यम्। एतदेव सवर्णनं त्रिष्ठाङ्कस्यैकस्थानस्थितत्वमिति यावत्॥ अत्रोपपत्तिः। उच्चस्थे ग्रहे
शुभफलं संपूर्णरूपमितम् अशुभफलाभावः। नीचे शुभफलाभावोशुभफलं संपूर्णरूपं मध्येनुपातेनोच्चबलतुल्यमे
वोच्चशुभफलं जातमुच्चबलोनरूपसममेवोच्चाशुभफलं जातम्। एवं षड्भमिते चेष्टाकेन्द्रे संपूर्णरूपं शुभफलमशुभ
फलाभावः। शून्ये चेष्टाकेन्द्रे शुभफलाभावोशुभफलं संपूर्णरूपम्। अन्तरा त्रैराशिकेन चेष्टाबलतुल्यमेव चेष्टाख्यं शु
भफलं चेष्टाबलोनरूपतुल्यमेव चेष्टाख्याशुभफलं जातम्। चेष्टोच्चफलयोरनयोः समुच्चयेन फलनिर्णये प्राप्ते संपूर्ण

प्रै॰ भ॰ तांशरूपमितायाएवन्याय्यत्वेचोपपत्तिरनुपातद्वितयात्मकपञ्चराशिकेन। यदिरूपमितेसंपूर्णेउच्चफलेसंपूर्णो
४८ चेष्टाफलेसंपूर्णंरूपंफलंतदस्मिन्नुच्चफलेस्मिंश्चेष्टाफलेकिमित्यत्रपञ्चसप्तनवराशिकादिकेन्योन्यपक्षनयनंफल
च्छिदाम्। संविधायबहुराशिजेवधेस्वल्पराशिवधभाजितेफलमितिलीलावतीसूत्रेणचेष्टोच्चफलयोःशुभयोर्घातस्
ष्टमशुभयोर्घातःकष्टंजातम्। अत्रोदाहरणम्। यत्रोच्चफलंरूपस्यपञ्चमांशश्चेष्टाफलंषष्ठांशस्तत्रपञ्चराशिकेन्या

सः स्मिन्चेष्ट

| | |
|---|---|
| $\frac{1}{5}$ | $\frac{1}{1}$ |
| $\frac{1}{6}$ | $\frac{1}{1}$ |
| १ | ० |

फलच्छिदामन्योन्यपक्षनयनंविधायन्यासः

| | |
|---|---|
| $\frac{1}{1}$ | $\frac{1}{5}$ |
| $\frac{1}{1}$ | $\frac{1}{6}$ |
| $\frac{1}{0}$ | १ |

अत्रफलपक्षोबहुराशिस्तत्रत्यबहुराशिजेघाते
न १ अन्यपक्षीयस्वल्पराशिवधेनानेन ३० भक्तेजातंफलम् $\frac{1}{30}$ फलयोर्घातोप्ययमेवातश्चेष्टो
बलतुल्यचेष्टोच्चशुभफलयोर्घातद्रूपंचेष्टोच्चबलोनरूपतुल्यचेष्टोच्चाशुभफलयोर्घातःक
मितिसिद्धम्। अत्रघातरूपेदृष्टेचेदाधिक्यंतदातन्मूलेप्याधिक्यंकष्टेचेदाधिक्यंतदातन्मूले
प्याधिक्यमितिसत्यभ्रावास्त्राचामाचार्याणांसंमतत्वादप्रमाणमपिमूलंगृहीतमाचार्येणेतिध्येयम्। मूलेमूलाभावा
देवाग्रेवर्गस्यशुभाशुभफलस्यवर्गेशशुभाशुभफलस्यचघातरूपमेवेष्टमुक्तंनतुतन्मूलरूपम्। अन्यथायुक्तिसा राम:
म्यात्तत्रापिमूलमेवोक्तंस्यादितिश्रीपतिपद्धतिटीकायांसुन्दरमिश्राअप्याहुः। यद्वाफलद्वययोगेनरूपद्वयमितेन ४८

यदिरूपंसंपूर्णफलंतदेष्टचेष्टोच्चफलद्वययोगेनकिमिंस्तनुपातेनचेष्टोच्चशुभफलयोर्योगार्द्धमिष्टंस्यात्तद्रूपाच्छो
धितंकष्टंस्यात्।अयंप्रकारोभगवत्पराशरस्याप्यभिप्रेतः।तथाचपराशरः।उच्चचेष्टाकरैक्येकौदिग्भिर्हत्वातुयोजये
त्।दलयेदिष्टमन्यत्स्यात्षष्टिभ्योवर्जितंफलम्॥१॥अत्रोच्चचेष्टरश्मीरूपोनौयावद्दशगुणौक्रियेतेतावत्षष्ट्यंशाद्ये
तुङ्गचेष्टाबलेएवभवतः।अतस्तद्योगार्द्धमिष्टंतदूनषष्टिमितंकष्टमिति।अत्रोपपत्तिः।षड्राश्यल्पंनीचग्रहान्तर
मुच्चकेन्द्रंभवति।चेष्टाकेन्द्रंतुमध्यस्पष्टयोगार्द्धचलोच्चयोःषडल्पान्तरतुल्यंप्रसिद्धमेव।तदुच्चकेन्द्रंचेष्टाकेन्द्रं
चराशिस्थानेसैकंद्विघ्नंशादियुतंसदुच्चचेष्टारश्मीभवतइतितेनैवोक्तम्।अस्योपपत्तिःप्रागुक्तैव।अथरश्मि 48
तौवैपरीत्येनकेन्द्रेसाध्येते।रश्मीरूपोनावथोदलीकृतौकेन्द्रेस्यातांतेसावयवेदशगुणेअथोद्विगुणेचषष्ट्यंशा
द्येतुङ्गचेष्टाबलेभवतः।तस्माद्रूपोनरश्मीदशगुणौबलेभवतइत्युपपन्नम्।शेषोपपत्तिःप्रागुपपादितैव।त
स्माच्चेष्टोच्चबलयोर्घातइष्टं बलोनरूपयोर्घातःकष्टम्।अथवाबलयोगार्द्धमिष्टं तदूनरूपंकष्टमितिनि[illegible]न्न
म्।मूलरूपेष्टकष्टंतुपराशरादिमुनिमतविरुद्धत्वादसुक्तत्वाच्चायुक्तमेवेतिबोध्यम्।तस्यदूषणान्तरमप्यग्रेवक्ष्य
ते॥साधितयोरिष्टकष्टयोःप्रयोजनमाह॥अथतद्रूपंदशायाःफलमिति॥अथशब्दआनन्तर्ये।दशायाःफलेशुभ

प्रे॰म॰ मशुभं चतद्रूपं स्यात् तद्रूपं तत्स्वरूपमिष्टकष्टतुल्यमिति यावत्। एतदुक्तं भवति। गणितागतमिष्टं संपूर्णमर्द्धपा
४९ दो वा यावद्भवति तत्तुल्यं शुभफलं कष्टेन तुल्यमशुभं फलम्। इष्टकष्टयोः साम्ये शुभमशुभं च प्राप्तं फलं संपूर्णा
न्मिश्रं फलमित्यर्थः। एतद्व्याख्यानं मूलरूपेष्टकष्टपक्षे तावदयुक्तम्। मूले मानाभावात्। किंच। मिश्रफलस्थले
क्वापि संपूर्णशुभफलस्य संपूर्णाशुभफलस्य चावश्यकत्वे मूलरूपे तु मिश्रफलस्थलेऽर्द्धाधिकमिष्टं कष्टं च कदा
पि न स्यादिति दूषणान्तरम्। घातयोगार्द्धपक्षयोरप्येतद्दूषणम्। अपि च। तथात्वे विसदृशाभ्यां घातयोगार्द्धपक्षसा
धितेष्टकष्टाभ्यां शुभाशुभफलनिर्णये कथमप्येकवाक्यता न स्यादिति। यद्वा। इष्टेऽधिके सामान्यतः शुभफलमधि
कं कष्टाधिक्ये त्वशुभफलमधिकं तत्साम्ये मिश्रं फलमिति। इदमप्ययुक्तम्। स्वल्पाधिक्यबह्वाधिक्यस्थले सर्व
त्राधिक्यस्य सामान्यरूपेण कथनस्यानौचित्यात्। अतोऽन्यथा व्याख्यायते। दशायाः शुभमशुभं च फलमिष्टकष्टस्वरू
पं स्यात्। अयमभिसंधिः। इष्टेऽधिके कष्टाद्यावदधिकमिष्टं शुभफलमशुभफलात्तावदधिकं स्यादशुभं फलं शुभफ
लात्तावदूनं स्यात्। कष्टेऽधिके इष्टात्कष्टं यावदधिकं तावदशुभं फलं शुभफलादधिकं स्यात्। इष्टकष्टयोः साम्ये शुभ रामः
मशुभं च फलं समं स्यादिति सुन्दरमिश्रसंमतमेतद्युक्तियुक्तं च। सुन्दरमिश्रवाक्यम्। कष्टेष्टयोर्विवरतुल्यमसत्स ४९

तोः स्यादत्रान्तरं द्विफलयोः समता समत्वे इति। नन्विष्टकष्टान्तरतुल्यं शुभाशुभफलान्तरमित्युक्तं तत्र ब्रूमः।
घातरूपयोर्योगार्द्धरूपयोरिष्टकष्टयोर्विरोधादुभयोरपि प्रमाणसिद्धत्वेन विनिगमकाभावादन्यतरपक्षाश्रयण
स्य कर्त्तुमशक्यत्वादिति चेत्, सत्यम्। घातरूपयोर्योगार्द्धरूपयोरिष्टकष्टयोर्यद्यप्युक्तो विरोधोऽस्ति तथाप्यन्तरे
तयोरविरोध एव। अनन्तरोदीरितव्याख्यानेनान्तरस्यैवोपयुक्तत्वात्। मन्दप्रतीत्यर्थमत्रोदाहरणम्। पूर्वमुदाहृते
उच्चचेष्टाशुभफले [illegible] एतदूनं रूपं क्रमादशुभं फलं [illegible] शुभफलघात इष्टम्। १/३० अशुभफलघातः कष्टम्। २/३०
अनयोरन्तरम्। १९/३० एवं शुभफलयोगार्द्धमिष्टम्। ११/३० अशुभफलयोगार्द्धं कष्टम्। ४९/६० अनयोरन्तरमिदम्। ३८/६० द्वा 49
भ्यामपवर्त्तितं जातम् १९/३० सममेव ततः सर्वमवदातम्। भावस्यानालोकयोगोद्भवं यत्तत्सर्वं तस्य योज्यं दशायां
मित्यभिहितत्वात्सर्वेणापि ग्रहफलेन दशायामेव भवितव्यमिति दशायाः फलमिति युक्तमुक्तम्। वक्ष्यमाणेनेष्ट
कष्टेन केवलं सप्तवर्गफलमेव चिन्तनीयं तदतिरिक्तं सर्वफलमनेनैवेष्टकष्टेन विचारणीयम्। तथा चाहुः। सप्तव
र्गफलादन्यत्सर्वमेतेन चिन्तयेत्॥ सप्तवर्गफलं वाच्यं वक्ष्यमाणेन केवलमिति। अतो दशायाः फलमित्यत्र सामा
न्यशब्दस्य विशेषपरत्वाद्दशायाः फलं सप्तवर्गफलातिरिक्तमिति व्याख्येयम्। ननु सर्वफलं दशायां योज्यमित्युक्ते

ग्रै.म. दृशायाः फलंतद्रूपमित्यनेनैवसप्तवर्गजफलनिर्णयेप्राप्तेकिमर्थंगुरुतरमाचार्येणपुनरिष्टकष्टानयनंकृतमिति।
५० शृणुतर्हि।यदिदमुक्तमिष्टकष्टसाधनंतत्पराशरादिसंमतम्।वक्ष्यमाणंतुयवनसंमतमिति।प्रकारद्वयंस्वस्वम
तेभिन्नमेवास्ति।तथासत्यंशायुर्दायादीनांचतुर्णांस्वस्वमतभिन्नत्वेपियथापूर्वैरंशोद्भवंलग्नबलात्प्रसाध्यमित्या
दिव्यवस्थाकृतातथेदानींतैःसप्तवर्गोत्पन्नत्वाद्वक्ष्यमाणेष्टकष्टस्यातस्तेनसप्तवर्गफलनिर्णयस्तदितरफलनि
र्णयश्चेष्टाद्बलोत्पन्नेनेष्टकष्टेनेतिव्यवस्थाकृतेतिनकश्चिद्दोषः।नचसप्तवर्गजेष्टकष्टंयवनोक्तत्वादप्रमाणमि
तिवाच्यम्।ब्रह्मविष्णुरुद्रमुखनिर्गतशापेनयवनतामधिगतेनभगवत्सूर्येणैवयवनशास्त्रप्रणयनात्।तथाचो
क्तमपावनंयावनशास्त्रंकथंविप्रैःपठितव्यमित्याशङ्कायांपूर्वैः॥केशविष्णुमुखनिर्गतशापान्म्लेच्छताधिगततिग्म
मरीचेः॥रोमकेनपुरिलब्धमशेषंतद्द्विजादिभिरतोऽध्ययनीयम्॥१॥म्लेच्छताधिगततिग्ममरीचेरितिपञ्चम्येक
वचनम्।पुरिरोमकपत्तने।अशेषंसमग्रं लब्धंशास्त्रमितिशेषः।अन्यत्स्पष्टम्।अत्रायंविशेषः।ग्रहस्ययन्नवांश
संबन्धिदृष्टिफलंतद्वर्गोत्तमस्वपरगेषुशुभंयदुक्तमित्यादिवक्ष्यमाणविशेषवाक्येनैवविचिन्त्यम्।लग्नस्यसप्तव रामः
र्गजंशुभाशुभफलंतुलग्नहोरादिस्वामिनश्चेष्टाद्बलोत्पन्नेष्टकष्टेनचिन्त्यमिति॥ ॥अथेष्टकष्टबलदृशोरानयन ५०

माह॥वीर्यंदृक्इष्टगिष्टकष्टगुणितेद्वेचेष्टकष्टाह्वयेइति॥ग्रहस्यवीर्यंषड्बलैक्यंपृथक्स्थानद्वयेस्थाप्यम्।एकत्रे
ष्टगुणमिष्टबलमपरत्रकष्टगुणंकष्टबलंस्यात्।दृगित्यत्रजात्येकवचनम्।तथाचग्रहंप्रतिदृष्ट्योयाःपूर्वमानीतास्ताः
ग्रहेष्टेनकष्टेनचगुण्याःक्रमेणेष्टदृष्टयःकष्टदृष्टयश्चभवेयुः।केचित्तु।ग्रहंप्रतियादृष्टयोयेषांग्रहाणामानीतास्ता
स्तत्तद्ग्रहेष्टकष्टाभ्यांगुणनीयादित्याहुः।अस्यप्रयोजनंग्रहस्यशुभफलंशुभबलवशाद्योज्यमशुभबलवशादशुभ
फलंयोज्यम्।एवंदृष्टिशुभाशुभफलमिष्टदृष्टिकष्टदृष्टिवशाद्योज्यमितिप्राञ्चः।मिश्रास्तु।बलदृग्गुणनमिष्टकष्टेन
व्यर्थमेवेत्यूचुस्तदेवयुक्तमुत्पश्यामः।तथाहि।इष्टेचेदाधिक्यंतदातद्गुणबलदृष्ट्योरप्याधिक्यंकष्टेचेदाधिक्यंत
दातद्गुणितबलदृष्ट्योरप्याधिक्यम्।यावदाधिक्यपक्षेपीष्टकष्टयोःसंपूर्णर्णरूपान्तरस्थलेग्रहस्ययावद्बलमस्ति 60
तावदेवान्तरमिष्टबलयोरेवंयावतीदृगस्तितावदेवान्तरमिष्टदृष्टिकष्टदृष्ट्योश्चभवतिपश्चात्तद्बलेनतयादृशाच
संपूर्णपादषष्ट्यंशकल्पनायामिष्टकष्टयोर्यावदन्तरंतावदेवेष्टकष्टबलयोरिष्टकष्टदृशोश्चान्तरमतोबलदृशो
रिष्टकष्टगुणनंव्यर्थमेव।जातकेयत्रोक्तमस्मिन्ग्रहेबलवतीदृक्फलंस्यात्तत्रसंपूर्णबलेषड्रूपाधिकेसंपूर्णफलमध्य
बलेषड्रूपाल्पेमध्यंहीनबलेत्रिरूपाल्पेहीनंफलंयुद्धवशात्शून्यबलेऽत्यल्पफलाभावइतिसंपूर्णबलमध्याद्यन्यत

श्री०म० मेनशुभाशुभंफलंसमंनिर्णीयपश्चादिष्टेयावदाधिक्येशुभंफलंतावदधिकंकष्टेयावदाधिक्यंतावदशुभफलमधि
५१ कंसाम्येसमम्।एवंगणितागतदृष्ट्यासंपूर्णपादषष्ठ्यंशादिनाशुभाशुभंसमंनिर्णीयपश्चादमुकग्रहदृष्टेयंग्रहएव
त्फलदइतिद्रष्टुरस्यैवफलदातृत्वाद्दृश्यस्येष्टेयावदाधिक्यंतावच्छुभफलमधिकमित्यादीष्टकष्टान्तरतुल्यंतार
तम्यमितिबलेनदशाचेष्टकष्टस्यसमुच्चयोनतुबाध्यबाधकभावइत्यप्याहुः॥ अथसप्तवर्गशुभाशुभनिश्चयायस
प्तवर्गेष्टकष्टसाधनंवृत्तद्वयेनाह॥ ॥ स्वोच्चेरूपंत्रिकोणेचरणविरहितंस्वर्क्षगेर्द्धंत्रयोंशंशांशाधीष्टसं
दृष्टेसुजिचचरणःस्यात्समर्क्षेष्टमांशः॥भूपांशोवैरिगेहेध्यरिभसुजिरदांशश्चनीचेखमीशादिष्टंगे
हेतद्वैकमस्तदथदलंषट्सुकार्यंतदैक्य॥१४॥ पङ्क्त्योःसप्तसुकोष्ठयोःप्रथमयोरिष्टास्तदैक्यंकृता
स्तेस्याप्यैभदलादिषट्सुचतदर्द्धंवर्गपानांपृथक्॥कृत्वोक्त्यासदसद्युतीनिजनिजेतन्निघ्नदृष्टाशुभे
वर्गेट्तत्स्वखगौजसोःसदसतोर्यातात्पदघ्नेस्फुटे॥१५॥ प्रथमपद्यंव्याख्यातचरमेवतथापिकिंचिद्व्या
ख्यायते।स्वोच्चमूलत्रिकोणादिवर्तिनिग्रहेरूपंचरणोनरूपप्रभृतिगेहेग्रहस्थानेईशाद्गृहाधीशवशादिष्टंस्यात्।अथ राम:
मभिसंधिःग्रहोयस्मिन्गृहेस्तितद्गृहस्वामीयदिस्वयमेवतदारूपार्द्धबलंयदपिमित्रंतदात्र्योंशंशादिति।अत्रेशप ५१

द्स्यस्वाधिमित्रादावन्वयोनतुस्वोच्चत्रिकोणनीचराशिषु।अत्रगृहेशेस्वोच्चादिगामिनिरूपप्रभृतिकंशुभंफलमिति
केषांचिद्व्याख्यानंप्राग्वत्तत्स्याख्येयम्।तस्यायुक्तत्वंदर्शितंदर्शयिष्येच।तेनेष्टेनर्उनमेकमसत्कष्टंगेहेस्यात्।अथा
नंतरंषट्सुहोरादिवर्गेषुदलंस्थाप्यंतत्रगृहवदागतशुभाशुभयोर्दलमितिकेशवसांवत्सराणांव्याख्यानम्।अत्रोदा
हरणम्।कश्चनग्रहोमित्रहोरायामास्तेतेनगृहवत्प्राप्तंशुभंचरणप्रमितम् १५ एतदूनंरूपंजातंगृहवदशुभंच·
४५ अनयोरर्द्धंजातेहोरास्थानस्थेक्रमेणशुभाशुभे ७।३०॥ २२।३० मिश्रास्तुयथाभदलादिकेषुवर्गेषुतस्यार्द्धम
तोनिधेयमित्यत्राश्रयगुणकरिष्टभङ्ग·दशाबलविषयेचगृहस्थस्यैवार्द्धंहोरादौसमंस्थाप्यतेतद्वदत्रापिगृ
हएवस्थापितस्यशुभस्याशुभस्यचार्द्धंहोरादौसममेवस्थाप्यमित्यूचिरे।तत्रकेशवदैवज्ञानामयमाशयः।
अस्मिन्स्थलेसर्वैरपिशुभपापफलार्द्धमितिसामान्येनोक्तत्वाद्गृहवदागतशुभाशुभयोरेवदलंस्थाप्यम्।भद 51
लादिकेषुवर्गेष्वित्यादौरिष्टभङ्ग·बलादौचतच्छब्दस्यपठितत्वात्तेनचपूर्वपरामर्शाद्गृहेस्थापितस्यैवार्द्धंस्थाप्य
म्।तथाचरिष्टभङ्गे·श्रीपतिपद्धतौ।तद्दलंभवतिशेषवर्गजमिति।आश्रयगुणकेचहोरादिवर्गगुणकस्तुभवेत्त
दर्द्धमिति।दशाशुभाशुभयोरेवहोरादौदलमिति॥ ॥अहंतुब्रवीमि॥स्वोच्चेमूलत्रिकोणेचस्वर्क्षेधिसुहृदिक्ष

प्रौ॰ म॰ मात्। मित्रर्क्षे च समर्क्षे च स्यान्तु भेवाधिशस्तुभे॥१॥ नीचे च षष्टेरिःफस्थैः स्वामिभिः करकरास्तिथिः॥ नागो वेदाः क्रूरे शून्यं
५२ शुभमेतत्फलं विदुः॥२॥ षष्ठिभ्यो वर्जिताश्चैते शिष्टं स्यादशुभं फलम्॥ तदर्द्धं तु फलं प्रोक्तमन्यवर्गे शुभाशुभम्॥
॥३॥ इति पद्यत्रयेण तच्छब्दस्य प्रयोगाद्युक्तिस्युक्तत्वाच्च गृहफलस्यैवार्द्धं समं स्थाप्यम्॥ ॥ कार्यं वदैक्यमिति॥ सप्तस्था-
नस्थफलानां शुभानामैक्यमशुभानां चैक्यं कार्यमित्यर्थः॥ पङ्क्त्योरिति। सप्तसु कोष्ठेषु पङ्क्त्योः कृतायोर्दृष्टा सदै-
क्ये स्थाप्ये इति योजना। सप्त शोभनाः कोष्ठा ययोस्ते तथा पङ्क्त्योः शुभाशुभपङ्क्त्योः। सप्तमी द्विवचनमेतत्। दृष्टे
च असत्त्वदृष्टा सती तयोरैक्ययोगौ। दृष्टैक्यं प्रागानीतं चतुर्भक्तं शुभपङ्क्तौ स्थाप्यं कष्टैक्यमशुभपङ्क्तौ चतुर्भक्तं
स्थाप्यमित्यर्थः। ननु सप्तकोष्ठानां सत्वाद्विनिगमकाभावेन कस्मिन्स्थाप्यमित्याशङ्कायामाह। प्रथमयोरिति। प्रथमयो-
रर्थात्कोष्ठयोः। गृहकोष्ठकयोरितियावत्। इदमपि सप्तमी द्विवचनम्। होरादिवर्गेषु तु गृहस्थापितफलस्यैवार्द्धं
समं स्थाप्यम्। वर्गपानामिति। गृहादिसप्तवर्गस्वामिनां पृथक्प्रत्येकं निजनिजे स्वीये स्वीये सदसद्युतौ शुभैक्या-
शुभैक्ये उक्त्वा पूर्वोक्तप्रकारेण कृत्वानन्तरं ताभ्यां निघ्ने दृष्टाशुभैक्ये पङ्क्त्योः सप्तसु कोष्ठयोरित्यादिना स्थापि राम:
ते ते कार्ये उक्त्वेत्यनेन स्वोच्चे रूपमित्यादिना स्थापितयोरेव शुभाशुभयोरैक्यं कार्यं न त्वनन्तरं स्थापितयोरिति ध्व ५२

नितम्। अत्रे दूदे द्विवचनं गृह्यमिति प्रगृह्यत्वात्प्लुतप्रगृह्या अचि नित्यमित्यनेन प्रकृतिभावस्तस्मात्तन्निघ्नेदृष्टाशु
भे इति पाठेन भाव्यम्। एवं न छन्दोभङ्गो दुर्वारः। अतस्तत्त्वं गुणेष्टाशुभे इति कृतसमासः पाठो रमणीयः॥ ननु कार्ये तदे
कैदे इत्यनेन प्राग्योगमभिधाय पुनर्यदाचार्येण योगः कार्य इत्युक्तं तदयुक्तमिव प्रतिभाति पुनरुक्तिदोषादिति चे
त्। सत्यम्। यदि प्राक्साधित एव योगोऽनष्टः स्यात्तदा पुनर्योगसाधनं व्यर्थमेव। तथापि यदि प्राक्साधितयोग
स्य चतुर्भागं गृहीत्वा नाशः क्रियते तदा पुनर्योगकरणं सार्थकमेवेत्यनुशयेनाचार्यैरुक्तमिति न कोऽपि दोषः। यद्वा। ग्र
न्थे इति कर्तव्यतायां च लाघवं प्रतिपादयताचार्येण यत्पुनर्योगसाधनमभिहितं तत्रेदमाकूतम्। प्राग्योगसाधनं व्य
र्थमेव। किंतु स्वोच्चे रूपमित्यादिना ग्रहस्यापि तस्यैव शुभाशुभस्य चतुर्थांशः स्यादिति। यद्येवमभिमतं तर्हि योगच 52
तुर्भागः स्यादिति किमर्थमुक्तमिति नाशङ्कनीयम्। दामोदरादिग्रन्थाभ्यासवशादुक्तमिति वक्तुं शक्यत्वात्। अत्र
श्रीपतिभिरपि। ये खेटभोच्चादिफलेषु भाशुभे सरूपवर्गार्द्धविभाजिते इति ग्रहशुभाशुभस्यैव चतुर्थांशः स्थापितो
न तु योगस्य। यद्यत्र योगोऽभिमतः स्यात्तदा तदीयमुक्त्ये स्वग्रिमग्रन्थवदुक्तः स्यात्। अतः पङ्क्त्योः सप्तसु कोष्ठयोः प्र
थमयोरिष्टासन्नीतेकृता येस्यास्ये इति पाठः पाठ्यः। यद्वा। शब्दक्रमादर्थक्रमो बलीयानिति न्यायात् वर्गणानां ष्टयस्तु

ग्रै०न० तथापूर्वप्रकारेणयेनिजनिजेसदसद्युतीतन्निघ्नेद्दृष्टाशुभेफलानन्तरंवक्ष्यमाणंकर्मकार्यमितिव्याख्येयम्।कलित
५३ केशवमतैरेतदेवाभ्युपेयम्।अमुनाप्रकारेणसाधितेयेदृष्टाशुभेतेवर्गेट्ततस्यखवर्गौजसोःसदसतोर्घातात्पदघ्नेस
तीस्फुटेभवतः।वर्गेट्वर्गस्वामी।तस्यःस्ववर्गोवर्गस्यग्रहः ओजसोःबलयोः सदसतोरिष्टगुणितयोः।शेषंस्पष्टम्।अत्रे
ष्टकष्टबलयोर्घातःश्रीपतिसुन्दरादिविरुद्धः किंतुकेवलयोरेवबलयोर्घातःकार्यः।अतोत्रैवंपठितव्यम्।वर्गेट्त
स्यखवर्गौजसोःसदसतोर्घातात्पदघ्नेस्फुटेइति॥अथोपपत्तिः सारावल्याम्।राशिपतौबलयुक्तेराशौचबलान्वितेत
थाचन्द्रे॥राशिफलंवत्सकलंनीचोच्चादिविधिनाचसंचिन्त्यम्।अत्रराशिबलस्वामिबलयोगेनराशौबलवतीदमर्थ
मितिप्रागुक्त्याराशिपतौबलयुक्तेतथाचन्द्रेबलयुक्तेतद्राशिफलंसकलंसंपूर्णंसंचिन्त्यं नीचोच्चादिविधिनाचसंचि
न्त्यं।नीचोच्चादिविधौचकारेणराशिपतिचन्द्रयोःसमुच्चयः।तथासतिचन्द्रस्यनीचोच्चत्रिकोणस्वगृहादिस्थानवशेन
चन्द्राधिष्ठितराशेःस्वामिनश्चनीचोच्चत्रिकोणस्वगृहादिस्थानवशेनचन्द्रस्यराशिफलंचिन्त्यम्।अर्थादेवंहोरादिफ
लेपि।होरादिपतौबलयुक्तेतथाचन्द्रेबलयुक्तेचन्द्रस्यतदधिष्ठितहोरादिपतेश्चनीचोच्चत्रिकोणस्वगृहादिस्थानवशे रा०म०
नचन्द्रस्यहोरादिफलंचिन्त्यम्।पश्चादस्यवाक्यस्यस्वोच्चेस्थितःशुभफलमित्यादिवाक्यद्वयेनसहैकवाक्यतयास्व ५३

च्चत्रिकोणस्वगृहादिस्थानजशुभाशुभफलस्यसंकोचेनसप्तवर्गफलेविषयेऽसिद्धेचन्द्रः स्वोच्चस्थः स्वसप्तवर्गफलंशुभंसं
पूर्णमशुभंशून्यंकरोतिमूलत्रिकोणस्थः शुभंपादत्रयमशुभंपादंकरोतीत्यादिनाचन्द्रस्यस्वोच्चत्रिकोणस्वगेहादिस्थानजशु
भाशुभफलंसप्तवर्गेऽपिसमानंसिद्धम्।गृहहोरादिपतेश्चनीचोच्चादिविपरीतारतम्येनशुभाशुभफलस्याकाङ्क्षायामविशे
षात्स्वोच्चेस्थितः शुभफलमित्यादिसिद्धंतारतम्यमेवलभ्यम्।एवंसतिचन्द्राधिष्ठितराशिहोरादिस्वामीस्वोच्चस्थश्चन्द्रस्यराशि
होरादिफलंशुभंसंपूर्णमशुभंशून्यंकरोतीत्यादिनातत्तद्वर्गेतत्तद्वर्गेशस्यस्वोच्चादिस्थानजशुभाशुभफलमन्यदपिसिद्धम्। त
थाचायंनिष्कृष्टोऽर्थः। चन्द्रस्यस्वोच्चत्रिकोणादिस्थानजशुभाशुभफलेनचन्द्राधिष्ठितराशिहोरादिपतेश्चस्वोच्चत्रिकोणादिस्थान
जशुभाशुभफलेनसमुच्चयेनचन्द्रस्य राशिराशित्वादिफलनिर्णयः।एवंचन्द्रपदस्थानेभौमादिपदोल्लेखंकृत्वाभौमादिसप्तवर्गे 53
ष्वर्थसिद्धिःकार्या।अपिवस्तुतोऽन्येष्वनुपरिचिन्त्यातद्विचाराद्रोक्तेः।अथवर्गस्यवर्गेशयोःस्वोच्चादिस्थानजशुभफलंतदूनंरूप
मशुभफलमितिसिद्धेवर्गस्यस्वोच्चाद्यन्यतमस्थानजशुभाशुभफलयोःसप्तवर्गेऽपिसमयोस्तत्तद्वर्गेशस्यस्वोच्चाद्यन्यतम
स्थानजशुभाशुभफलयोस्तत्तद्वर्गेविलक्षणयोःसमुच्चयेनवर्गस्यराशिहोरादिसप्तवर्गफलस्यनिर्णयेप्राप्तेसंपूर्ण
तामारूपमितायान्यायस्तत्प्राग्वदुपपत्तिरनुपातद्वयात्मकपञ्चराशिकेन।यदिरूपोन्मितेसंपूर्णेवर्गस्यफलेसंपूर्णे

श्री·म· वर्गेशफलेसंपूर्णरूपंफलंतदास्मिन्वर्गस्यफलेस्मिन्वर्गेशफलेकिमितिपूर्ववद्वर्गस्यवर्गेशयोः शुभफलघातद्दृष्टम
५४ शुभफलघातःकष्टंजातम्। किंच। वर्गस्यवर्गेशयोरूपद्वयमितेनपरमफलयोगेनसंपूर्णरूपंयदिफलंतदानेनवर्ग
स्यवर्गेशफलयोगेनकिमितित्रैराशिकेनवर्गस्यवर्गेशयोः शुभफलयोगार्द्धमिष्टमशुभफलयो
गार्द्धकष्टंसिद्धम्। प्रमाणसिद्धयोरनयोरैक्यंपुराप्रदर्शितमेव। अतःसम्यगुक्तंसकलजातकशास्त्रतत्त्ववेदिभिःश्रीम
त्सुन्दरमिश्रैः। वर्गस्यभप्राप्तशुभाशुभेयेवर्गेशगेहोक्तशुभाशुभाभ्याम्। युतेर्द्धितेसंगुणितेथवातेराश्यादिवर्गस्यशुभा
शुभानीति॥ अथप्रकृतेस्वोच्चेरूपमित्यादितद्वैकमसदित्यन्तंसर्वंप्रतिपादितवासनमेव। प्रधानताराशिफलस्यनूनं
होरादिवर्गाद्द्विगुणंगृहंयदितिपवनवाक्येनहोराद्यपेक्षयाराशेर्द्विगुणयलाभेनराशेर्यत्स्यापितंतस्यार्द्धंहोरादिषुस
मंस्यात्प्रमतउपपन्नंदलंषट्स्विति। अग्रेवर्गेशस्यशुभयोगेनाशुभयोगेनचगुणनीयमस्त्यतःकार्यंतदैक्यदृतिसर्वं
साधु॥ अथवर्गस्यस्वशुभाशुभफलंवर्गेशशुभाशुभफलेनगुणनीयं तत्रकेवलयोर्गुण्यगुणकयोर्घातेयावत्फलेता
वदेवगुण्यगुणकयोरेकस्मिन्समेनकेनचिद्भक्ते गुणितेपरस्मिन्भक्तेपश्चात्तयोर्घातेकृतेसतिस्यादितिप्रसिद्धम्। य राम:
थागुण्यः ४ गुणकः १० अनयोर्घातेजातंगुणनेफलम् ४० अथवागुण्योद्विभक्तः २ गुणकोद्विगुणितः २० अनयोरपि ५४

घातेजातंतदेव ४०।द्विभक्तगुणकेन ५।द्विगुणितगुण्ये ८ हतेवातदेवजातम्।४०।एवमत्राचार्येणवर्गस्यशुभाशुभफ
लंगुण्यंचतुर्भिर्भक्तंकृतमतः पङ्क्त्योः सप्तकोष्ठयोः प्रथमयोरिष्टासतीतेकृताशेस्याप्येइतिसुष्ठूक्तम्।एकोइतिसं
पातायातम्।अत्रापिहोराद्यपेक्षयाराशेर्द्विगुण्येनराशिफलस्यैवार्द्धहोरादेःसमंस्थाप्यमतोभद्रलादिषट्सुचतदर्द्ध
इतिशोभनमभिहितम्।एवंवर्गेशस्यग्रहोक्तशुभाशुभफलरूपोगुणकश्चतुर्गुणितोजातंवर्गेशस्यसप्तवर्गजशु
भैक्याशुभैक्यतुल्यम्।यतोग्रहफलस्यार्द्धहोरादेःस्थापितमस्तिवर्गयोगेग्रहफलंत्रिगुणंभवतितत्रग्रहफले
योजितेचतुर्गुणंग्रहफलमेवभवतीतिग्रहफलेचतुर्गुणेसतिसप्तवर्गजफलयोगएवभवतीतिपर्यवसित
म्।असावेवगुणकः।अनेनगुणकेनचतुर्भक्तवर्गस्थग्रहफलरूपोगुण्योगुण्योतोवर्गपानांएष्यकृत्वो
त्यासद्दलसुतानिजनिजेतदंशगुणोशाशुभेइतिसर्वमवदातम्।अन्येतुग्रहस्वामिनिस्वोच्चमूलत्रिकोणादि
स्थेरूपपादोनरूपप्रभृतिकंशुभंफलंतदूनरूपतुल्यमशुभंचफलंस्थाप्यंहोरादौतुग्रहवद्रागतशुभयोर्दलंस्था
प्यंनग्रहस्थितफलस्यतथासप्तवर्गजशुभयोगाशुभयोगयोःचतुर्थांशः पङ्क्त्योःस्थाप्यो।नकेवलंग्रहस्यशुभा
शुभफलयोरित्याहुः।तत्रग्रहस्वामिनिस्वोच्चत्रिकोणादिस्थेरूपचरणोनरूपादिशुभंतदूनैकमशुभंफलमिति

श्री·म· ष्ठावदयुक्तम्।यतस्तथासतिवर्गस्यस्ववर्गेश स्यचस्वोच्चाद्यन्यतरस्थानजशुभाशुभफलाभ्यांसमुच्चयेनवर्गी
५५ स्यस्यशुभाशुभफलनिश्चयइतिद्वयोःपर्यवस्यति।वराहकल्याणवर्मादिग्रन्थावलोकनेनतुवर्गस्यवर्गेश्वर
योःस्वोच्चादिस्थानवशेनवर्गस्यशुभाशुभनिर्णयोयमर्थःप्रतीयते।अतस्तदसदित्यवधेयम्।होरादौगृहवद्व
गतयोःशुभाशुभयोर्दलंस्यात्पंतथासप्तवर्गजशुभाशुभैक्येचतुर्भक्तेपङ्क्त्योःस्यादित्यपिवासनाभूत्ततया
नितरामयुक्तमितिबोद्धव्यम्।अन्यथात्ररूपाधिकस्यापीष्टकष्टस्यसंभवात्सर्वत्रसंपूर्णतारूपात्मिकेतिपक्ष
तिकृतांगर्गपराशरादीनांसिद्धान्तोव्याकुप्येत।भावदृग्बलादौसर्वत्रपरमताल्परूपमितायाःकल्पितत्वाद
त्रैकल्पिकैवरूपाधिकपरमतास्वीकारेऽननुगमोपितद्दूषणम्।एतदननुगमभियैवप्रागिष्टकष्टत्रैराशिकद
याल्पकपञ्चराशिकेनोपपत्तिमुपकल्प्यचेष्टाख्यशुभफलघातःकष्टमित्युक्तंसर्वाचार्यैः।तस्मादिष्टकष्टविषयेसु
न्दरोक्तिरेवसुन्दरेतिदिक्।अथवर्गोदृततत्स्वगौजसौरित्यत्रयुक्तिः।राशिपतौबलयुक्तेइतिपूर्वप्रदर्शितेसारा
वलीवाक्येवर्गेशेबलयुक्तेवर्गस्थेचबलोपेतेतत्फलंसकलमित्युक्तम्।तथावर्गेशयोःस्वोच्चादिस्थानवशेन रामः
फलनिर्णयइतिचोक्तम्।एवंसतिसंपूर्णतायारूपमितायाएवन्याय्यत्वेनसर्वेषांसमुच्चयेनफलनिर्णयेप्राप्ते ५५

उपपत्तिस्त्रैराशिकत्रयात्मकेनसप्तत्रैराशिकेनयदिसंपूर्णवर्गस्यबलेसंपूर्णेवर्गेश। बलेसंपूर्णवर्गस्यवर्गेशशुभा
शुभफलघातरूपेकथितेइष्टकष्टेच संपूर्णरूपंफलंतदास्मिन्वर्गस्यबलेस्मिन्वर्गेशबलेस्मिन्वर्गेशवर्गस्यफल
घातरूपेकथितेइष्टकष्टेचकिमिति। पञ्चसप्तनवराशिकादिकमित्यनेनवर्गस्यवर्गेशबलकथितेइष्टकष्टघातोरूपे
णभाज्यइतिनिष्पद्यते। तत्राचार्येणबलघातस्यपूर्वंकृतः पश्चात्तेनप्रोक्तेइष्टकष्टंगुणनीयमित्युक्तम्। बलघात
स्यमूलंतुप्रागिष्टकष्टेचेष्टोद्भवफलघातस्यैवसत्यभावादुद्दिष्टमपूर्वंयथाचेष्टोद्भवफलयोःसमुद्भवेघातमूलमुक्तं य
थाचवर्गस्यवर्गेशफलयोःसमुद्भवेघातउक्तस्तथात्रापिघातमूलंघातश्चकिमितिनोक्तइत्येतद्ग्रन्थपरिशीलनव
तांशङ्कास्यात्तस्यानिवारणार्थंसत्यभावाद्वर्गस्यवर्गेशबलयोःसमुद्भवेघातमूलमुक्तंतेनचेष्टकष्टसमुद्भवेगुण
नमुक्तमितिमिश्राःप्रयोजनमाहुः। वस्तुतस्तुदृष्टेचेत्सामान्यतआधिक्यंवर्गस्यवर्गेशबलघातमूलेनगुणनेपित 55
स्मिन्नेवाधिक्यंकष्टेचेदाधिक्यंतदातस्मिन्नेव। यावदाधिक्यपक्षेपीष्टकष्टयोःसंपूर्णरूपान्तरस्यलेवर्गस्यवर्गे
शबलघातमूलस्यतुल्यमन्तरंभवति। ततोघातमूलेनसंपूर्णपादषष्ठ्यंशकल्पनायांपूर्ववदेतयोर्नकोपिविशेष
तोबलघातमूलेनगुणनान्यथा। एवंसत्यपियेचेष्टकष्टगुणितबलघातमूलेनगुणनमाहुस्तदेतीवव्यर्थम्। ९

प्रौ·म· वमेस्यगुणनस्यत्वमर्थत्वेपि प्राग्वत्प्रयोजनमूह्यं। यत्तु प्रागुक्तमिष्टकष्टान्तरतुल्यं शुभाशुभफलान्तरमिति तदुदाह
५६ रणं प्रदर्श्यते। बृहज्जातके शनिक्षेत्रस्थशुक्रफलम्। रविजर्क्षगते ऽमरारिपूज्ये सुभगः स्त्रीविजितो रतः कुनार्यामि
ति। वर्गस्थः शुक्रो वर्गोत्तमः शनिस्थानात् षड्रूपाधिकवीर्यस्तेनेदं शुभमशुभं च फलं संपूर्णं पश्चात्संपूर्णतायामेव सुभग
इति शुभफलात् स्त्रीविजितः कुनार्यां रत इत्यशुभफलमेतावदधिकम्। $\frac{5}{46}$ इष्टकष्टान्तरे कृते कष्टस्यैतत्तुल्यस्यैवाव
सीयमानत्वात्। एवं च बुधस्य तत्रैव स्वत्रिंशांशफलम्॥ मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताः श
शिजेति मान्याः॥ बुधस्य त्रिंशांशको ऽष्टके इष्टं $\frac{1}{4}$ कष्टम् $\frac{1}{2}$ एतदन्तरम्। $\frac{1}{4}$ अत्र वर्गस्थो वर्गेश्वरश्च बुध एव स च मध्यब
लस्तदिदं शुभमपि मध्यमं पश्चात्तत्रैव कपटयुतात्मकाद् शुभफलाच्छुभफलं मेधाकलाकाव्यविवादशिल्पशास्त्रार्थ
साहसयुतादिकमेतावदधिकम्। $\frac{1}{2}$ एवं सर्वत्र फलानां विचारो विधेयद्भव्यलमति चापल्येन। सवासनायां समकारि
तचिद्दिवाकरेणामलकेशवोक्तेः॥ तत्रेष्टकष्टानयनाधिकारः समग्रसारः समगात्समाप्तिम्॥ १॥ इति श्रीकेशवसांवत्स
रिकजातककर्मपद्धतिटीकायां दिवाकरविरचितायां प्रौढमनोरमाभिधायां सवासनायामिष्टकष्टाध्यायः चतुर्थः॥ अ राम:
थ भावस्थानालोकयोगो दूषयन्तन्न कर्वतस्य योज्यं दशायामिति बृहज्जातकोक्तेः सर्वेणापि फलेन दशास्वेव भवितव्यम्। ५६

दशाज्ञानं त्वायुर्दायाधीनमेवं क्रमेणं यदायुर्ज्ञानं जातकफलेप्रयोजकमतआयुर्दायाध्यायआरभ्यते॥ तत्रायुर्द्विविधं यो
गजंगणितागतं च। योगजमपि चतुर्द्धा। रिष्टजं परमं नियतममितं च। तत्र रिष्टजस्योदाहरणम्। सिंहालिकुम्भस्थितसैं
हिकेयो विलोकितः क्रूरखगैर्यदिस्यात्॥ वर्षाणि सप्तैव तदीयमायुः प्रकीर्तितं जातकशास्त्रविद्भिः॥ परमायुषश्च, अनि
मिषपरमांशके विलग्ने शशितनये गविपञ्चवर्गलिप्ते। भवति हि परमायुषः प्रमाणं यदि सहिताः सकलाः स्वतुङ्गभेषु॥
नियतस्य। लग्नाष्टमारीन्दुयुतानचेत्स्युः क्रूराः स्वभस्था यदि खेचरौ द्वौ॥ बलान्वितावम्बरगौ भवेतां जातः शतायुः कथि
तो मुनीन्द्रैः॥ अमितस्यापि। गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते॥ भवरिपुसहजोपगैश्च शेषै
रमितमिहायुरनक्रमाद्विनास्यादिति॥ गणितागतमपि पञ्चविधम्। अंशजं पिण्डजं नैसर्गिकं जीवशर्मोदितं मिश्रं च
एतन्मिश्रमपि चतुर्द्धा॥ एवं हि दशप्रकारमायुरिति व्यवर्णयन्त्याचार्याः। तथा च होरामकरन्दे॥ आयुर्मुनीन्द्रैर्द्विविधं प्र 56
दिष्टं योगोद्भवं चानियतात्मभेदत्॥ आद्यं चतुर्भेदविभिन्नमाहुरन्यत्तथा पञ्चभिरत्रभेदैः॥१॥ रिष्टं परं नियतमत्र त
थामितं च भेदाश्चतुर्विधमिति योगसमुद्भवस्य॥ पैण्डं तथांशजनितं च निसर्गमन्यत्सत्यांशमिश्रमिति चानियतस्य भेदाः॥
॥२॥ चन्द्रार्कयोश्चन्द्रविलग्नयोश्च लग्नेनयोः सूर्यविधूदयानाम्॥ साम्येबलानामिति मिश्रभेदाश्चतुर्भवेद्दशधैः

श्री.म. वमश्रेति॥ ३॥ तत्र योगजायुर्दायभेदस्यामितायुर्दायस्योदाहरणं तावद्वृत्तार्द्धेनाह॥ ॥ कर्कीन्दीज्ययुतोदये बु
५७ धसितौ केन्द्रेष्वरीशेतरैरायुर्विद्ध्यमितं हि योगजमिदान्यत्रोच्यते योन्मितम्॥ ॥ कर्की कर्कराशिः इ
न्दुश्चन्द्रः इज्यो बृहस्पतिः। एभिर्युतस्तथा सावुदयश्च सतथा। तस्मिन्कर्कीन्दीज्ययुतोदये। कर्कलग्ने चन्द्रगुरुसहित
इत्यर्थः। केन्द्रे लग्नचतुर्थसप्तमदशमस्थानरूपे यदि बुधसितौ मिलितौ पृथग्वा भवतः। अयश्च अरयश्च ईशा
श्च अन्यरीशाः अयस्तृतीयस्थानम्। अरयः षष्ठम्। ईशा एकादशम्। एषु स्थानेषु इतरैः सूर्यभौममन्दैः इहास्मिन्यो
गे अमितमायुर्विद्धि। जानीहीत्यन्वयः। क्रियाबलाद्गणकेत्यध्याहारः। अन्यत्र ग्रन्थान्तरे योगजमायुर्विद्धि। अत्र
तु ग्रन्थे उन्मितं गणितागतमायुरुच्यते। मयेति शेषः। योगजमित्यत्र सामान्यशब्दो विशेषपर इत्यमितायुर्दाया
तिरिक्तं योगजमिति व्याख्येयम्। एतदर्थोपलम्भायैव हि शब्दो दत्त इति बोध्यम्। अन्यथा मितायुर्दायस्य योगजा
युर्दायाद्बहिर्भूतत्वमापद्येत। तथा सति योगजमायुश्चतुर्द्धा। रिष्टपरनियतामितभेदादिति हौरिकोक्तं दत्तजला
ञ्जलि स्यात्। योगजमिवान्यत्रोच्यते इति पाठे अस्मिन्योगे अमितमायुर्विद्धि। किमिव अन्यत्र ग्रन्थान्तरे योगजमिव। राम:
योगजमित्यत्र प्राग्वद्विशेषपरता। तथा च ग्रन्थान्तरादमितायुर्दायव्यतिरिक्तं योगजमायुर्ज्ञेयं नहि। तद्वदेवात्र यो ५७

गेमितमायुर्जीनीहीतिभावः। अत्रामितायुर्दीयस्य योगजायुर्दीयोपसंज्ञानाशएव. यद्वात्र योगेमितमायुरिवग्रन्था
न्तरेयोगजमायुर्विद्धीतिद्रुवशब्दस्य भिन्नक्रमयोजनार्थः साधीयान्। अथगणितागतायुरानयनं विवक्षुस्तावत्तद्द
स्यांशायुर्दीयस्योपयोगिभूतान् चेष्टागुणोच्चगुणरश्मिगुणान्वृत्तोत्तरार्द्धेनाह॥ ॥ स्वल्पाश्चेत्किरणाः सरूप
किरणाङ्घ्रिश्चेत्त्रयोर्ध्वाविभूगोऽर्द्धं चेष्टिकतुङ्गसंभवगुणौ तद्घातमूलं स्फुटः॥१६॥ स्पष्टोऽर्थः॥ घातमू
लप्रक्रियापूर्वाधिकारोक्ता बोध्या॥ अत्रोपपत्तिः॥ लघुजातके। शत्रुक्षेत्रे त्र्यंश नीचेर्द्धं सूर्यलुप्तकिरणाश्च॥
स्पपन्तिस्वाद्याया न्नास्तंमातौ रविजशुक्रौ॥ त्र्यंशायुषिपरमोच्चे त्रितयगुणः परमनीचेऽर्द्धहानिः। दर्शितरीत्या चेष्टापर
योर्वक्रास्तपदयोर्द्वयोरपि सत्वात्तत्र परमचेष्टाह्रासे शून्ये चेष्टाकेन्द्रेऽर्द्धहानिः। षड्भमिते त्रयं गुणः। ततोऽर्द्धहानिमार
भ्यहान्यभावपर्यन्तमेकं त्रैराशिकं ततो गुणोपचयेन त्रिमितगुणपर्यन्तं द्वितीयम्। अत्रैकेन गुणने हान्यभावे च तदे 57
वायुस्तिष्ठतीत्येकगुणस्थानं हान्यभावस्थानं चैकमेव। तत्र शून्यचेष्टाकेन्द्रान्नीचाच्च षड्भान्तरे त्रिमितगुणस्थानमतः
कारणाद्दर्थादेकगुणस्थानं राशिद्वयान्तरे॥ हानिरपि परिणामे गुणात्मिकैवेति शून्यचेष्टाकेन्द्रे नीचे चार्द्धं गुणः। अ
तः शून्यचेष्टाकेन्द्रे नीचे चैकोरश्मिस्ततोऽग्रतो रश्मिद्वयोपचयेनार्द्धगुणोपचयस्तत्रोऽनुपातः। यदि रश्मिद्वयेन रूपा

द्वैगुणस्तदाविरूपकिरणतुल्यैः शून्यचेष्टाकेन्दुनी चाग्निमरश्मिभिः किमितिविरूपकिरणाङ्घ्रिर्गुणाद् इति जातम्।
रू $\frac{१}{४}$ र १। अयं रूपाद्रूमितगुणे समच्छेदविधिनायोज्यस्तत्र समच्छेदौ। रू $\frac{१}{४}$ र १। रू $\frac{३}{४}$। अत्ररश्मिगुद्वयंयोज्यम्। ए
कः शेष्योतः सरूपकिरणाङ्घ्रिर्गुणद्युपपन्नम्। इदंसाधनंरूपत्रयाल्पराशिगुज्ञेयम्। अथान्योऽनुपातः। यदिरश्मि
त्रयाधिकरश्मिभिश्चतुर्मितेद्विमितोगुणस्तदेष्टैरूपत्रयोनरश्मिभिः किमिति। अत्रगुणहरौ द्वाभ्यामपवर्त्यजातम्।
रू $\frac{३}{२}$ रू १ अत्रैकगुणः समच्छेदविधानेनयोज्यस्तत्रसमच्छेदौ रू $\frac{३}{२}$ रू १। रू $\frac{२}{२}$। अथरश्मिगुद्वयंयोज्यंत्रयंहेयम्।
तत्रानयोरन्तरेरूपमेवर्णमवशिष्टमतोविरूपकिरणार्द्धगुणइत्यपियुक्तम्। अथस्फुटगुणोपपत्तिः॥ गर्गः॥ ध्रुवा
ख्यहानिः कर्त्तव्याततोन्यासुबहुष्वपि॥ प्राप्तास्वेकैवकर्त्तव्या यास्यात्तासुमहत्तरा॥१॥ ततोपिगुणनाकार्याप्येकैवमह
तीसकृत्॥ द्वाभ्यांवर्गोत्तमेस्वांशेस्वद्रेष्काणेस्वकेगृहे॥२॥ त्रिभिर्वक्रगतस्याथस्वोच्चराशिगतस्यच॥ समगुणस्यत्वेए
कान्यतरैवगुणनाकार्या। विषमगुणस्थलेमहतीसकृद्गुणनाकार्येति तदेतदर्थलाभायैवसकृत्पदंपुनरुपात्तम्। अत्र
त्रिगुणाएवमहद्गुणस्त्रिगुणमितिविहायमहत्पदोपादानस्यनिर्बन्धेनाचार्यकत्वंतुबहुघ्नतायामेकंतुयद्भूरितदे
वकार्यमितिवराहवाक्येभूरिपदग्रहणस्यचेदंतात्पर्यम्। यत्त्रिगुणत्वेनोनाग्रहः किंतुयुक्तिसिद्धमेकंभूरिगुणनंका

र्यम्। युक्तिसिद्धं तु मूलेन गुणनम्। विषमगुणस्थले च स्वल्पत्वादन्यतरस्मान्मूलमपि भूरि भवत्येव। लघुजातके। वर्गोत्तम
स्वराशिद्रेष्काणनवांशके सकृद्द्विगुणम्। वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत्त्रिगुणम्॥ अस्यार्थो मिश्रोक्तः वर्गोत्तमादिवशाद्ब
हुवारं द्विगुणत्वप्राप्तौ सकृदेकवारं द्विगुणं कार्यम्। वक्रवशेनोच्चवशेन च त्रिगुणत्वे प्राप्ते सकृत्त्रिगुणितं कर्तव्यम्। अ
त्रान्यगुणप्राप्तावेतयोरेव प्राप्तावन्यतरगुणनियमनावश्यकत्वे सकृत्पदानुषङ्ग आवश्यकः। वर्गोत्तमेत्याद्युक्ते स
कृद्द्विगुणे व्यवहारार्थमाश्रयगुणेति धृतसंज्ञे प्राप्ते वक्रोच्चयोरित्याद्युक्ते सकृत्त्रिगुणे स्फुटगुणकसंज्ञे च प्राप्ते सकृ
त्त्रिगुणे भूरिगुणं कर्तव्यमिति। अत्र वक्रोच्चयोः सामान्यतस्त्रयाणां वर्गेण गुणने प्राप्तेऽन्यतरस्मिंस्त्रिमिते गुणके नियमि
तेषां मूलेन गुणनमुक्तं पदस्य वर्गस्य त्रयो मूलम्। किंच। प्रकृते त्रयाणां वर्गेण सामान्येन गुणने प्रसक्तेऽन्यतरस्मिंस्त्रिमित 58
गुणनियमनलक्षणो विशेष उक्तः। विशेषे च सामान्यसंबन्धस्यावश्यमपेक्षेति विशेषलक्षणेऽन्यतरत्रिमितगुणे सा
मान्यवर्गस्य तन्मूलत्वमेव संबन्धः। तथा सति तन्मूलत्वपुरस्कारेणैव गुणने प्रसक्ते तन्मूलेनैव गुणनं तात्पर्यतः सिद्ध
म्। किंच यमं द्वयपातेऽपि करणी रूपो वर्गराव भवतीति द्वित्रिगुणत्वे स्फुटगुणाश्रयगुणघातस्थलेऽपि मूलेनैव गुणने [illegible]
नम्। यत्तु बहुताडनसंप्राप्तौ याकरोत्येकवर्गणाम्। वराहमिहराचार्यस्तान दृष्टापुसतनैरिति सारावलीवाक्यस्वरसः

प्रौ॰ म॰ इत्यन्यमतं दूषयता केशवार्केण पृथगपि द्विगुणे त्रिगुणे सकृत्त्रिगुणमित्यबद्धोक्तिरियं मत इति विवाहवृन्दावने ऽसि
५९ धायि तद्दुर्गादिमुनिग्रन्थविरोधादसदेवेति बोध्यम्। अथाश्रयगुणकमाह ॥ ॥ यः स्वाधीशसुहृत्समार्यधिरिपो
र्वर्गे धृतिश्चेषिला विश्वाङ्केषु गुणा गृहे द्विगुणिता योगः क्रमात्तं हरेत्॥ तद्वेषड्वसुगौशुमद्दृति जिनैः
षड्घ्नेष्वं वर्गोत्तमस्वांशान्त्यांशगते सदा रसगुणैः स्यादाश्रयाख्यो गुण इति॥ १७॥ यो ग्रहः स्वाधीश
सुहृत्समार्यधिरिपोर्वर्गे गृहादिसप्तवर्गे स्यात्तस्य धृतिरिषिलादृत्याद्योङ्काः क्रमात्स्थाप्याः। चकारेण वर्गे इत्यनु
षङ्गः स्वादीनां यस्मिन्गृहाद्ये वर्गे ग्रहः स्यात्तत्र वर्गे धृत्याद्योङ्काः क्रमात्स्थाप्या इत्यर्थः। स्वश्च अधीशश्च सुहृच्च सम
श्च अरिश्च अधिरिपुश्च एषां द्वन्द्वैकत्वं क्लीबता च। उक्तपुंस्कत्वात्पुंवद्रूपम्। धृतिरष्टादश। इषिलाः पञ्चदश। इरा
भूवा वसुरा प्युस्यादिति शान्तेषु पाठाद्रेफान्त एवेरा शब्दो न तु लान्त इति कश्चित्। तन्मन्दम्। अस्ति बलान्तो ऽपि ला शब्दः
भूगोवाचस्विडा इला इति त्रिकाण्डीस्मरणात्। इला कलत्रे सौम्यस्य धरित्र्यां गविवाचि चेति मेदिनीकोशाच्च। प्रहृष्ट
पुष्टाखिलगोकुलामिलामिति भास्करोक्तिरप्यनुकूला। विश्वे त्रयोदश। अङ्का नव। इषवः पञ्च। गुणास्त्रय इति। गृहे राम:
गृहवर्गे धृत्याद्यो द्विगुणिताः स्थाप्याः। यथा स्वगृहे षट्त्रिंशदधिमित्रगृहे त्रिंशदित्यादि तेषां सप्तसु वर्गेषु स्थापितानां ५९

मङ्कानां योगः कार्यः। तं योगं तद्धेतेषां स्वाधीष्टादीनां भेरा शौ ग्रहे सति क्रमात् षड्वस्वित्यादिभिरङ्कैः षड्घ्नैः षड्गुणितैः हरे
त्। भजेत्। गणक इति शेषः। षट् प्रसिद्धाः वसवोऽष्टौ गावो नव अंशुमन्तो द्वादश धृतयोऽष्टादश जिनाश्चतुर्विंशतिः ए
भिः षड्घ्नैरङ्कैस्तं योगं भजेदित्यर्थः। क्रमादिति काकाक्षिगोलकन्यायादुभयत्र संबध्यते। वर्गोत्तमस्वांशत्र्यंशगते ग्रहे
सदा रसगुणैः षट्त्रिंशता तं योगं हरेत्। अंशाश्च त्र्यंशाश्च अंशत्र्यंशाः। स्वस्य अंशत्र्यंशाः स्वांशत्र्यंशाः वर्गोत्तमाश्च स्वां
शत्र्यंशाश्च वर्गोत्तमस्वांशत्र्यंशाः। यत्र राशौ ग्रहस्तस्यैव राशेर्नवमांशे चेद्भवेत्तदा स नवमांशो वर्गोत्तमांशः। तदुक्तम्। रा
शिर्यः स्यात्सोऽपि नन्दांशकश्चेदुक्तस्तस्मिन्नेव वर्गोत्तमांश इति। स चैकस्मिन् राशौ कतमो भवति। तदुक्तं बृहज्जातके।
वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्तगाः शुभफला नवभागसंज्ञा इति। स्वांशः स्वराशिनवमांशः स्वत्र्यंशः स्वराशि
द्रेष्काणः तेषु वर्गोत्तमादिषु गते वर्तमाने ग्रहे षट्त्रिंशता भजेत् न तु प्रोक्तहरेणेत्यर्थः। एवं हरेण भजने यल्लभ्यते रूपा 59
दि स आश्रयनामा गुणो भवेत्॥ अथैवं सिद्धस्याश्रयगुणकस्य कदाचित्संस्कारमाह॥ ॥ चेद्वर्गोत्तमपूर्वगोऽध्यरिसु
हृद्वेत द्रहाङ्कात्त्रिषड्लब्ध्योनोऽगुगरिष्टभेऽब्धिनवका स्यात्स्वे समे केवलः॥ कार्यस्त्वाश्रयकः सः ॥ ॥
चेद्यद्वो वर्गोत्तमपूर्वगः वर्गोत्तमनवमांशस्वनवमांशस्वद्रेष्काणान्यतरस्मिन्वर्तमानः सन्नध्यरिसुहृद्गृहे अधिरिपोरधि

प्रौ.मं. मित्रस्यवागृहेभवेत्।तत्तदागृहाङ्कात्पूर्वंगृहवर्गैःस्थापितादङ्कात्त्रिषड्भिर्लब्ध्याप्राप्तफलेनसआश्रयकःऊनोयुक्तःका
६० र्यःआश्रयएवआश्रयकःस्वार्थेकप्रत्ययः।आश्रयगुणकइत्यर्थः।चेद्गौत्तमपूर्वगःसन्नरिष्टभेशत्रुराशौमित्रराशौ
नास्यात्तदागृहाङ्कादभिनवकेभ्यस्तुनवत्याआप्तालब्धेनऊनयुक्कार्यः।एतदुक्तंभवति।मित्राधिमित्रगेहयोर्गृहाङ्का
त्स्वहरेणफलंप्रानीताश्रयगुणेयुक्तंकार्यम्।अधिशत्रुशत्रुगृहयोस्तुहीनंकार्यमिति।अत्रोपपत्तिः।वर्गोत्तमस्वरा
शिद्रेष्काणनवांशकेसकृद्द्विगुणमितिलघुजातकोक्तेर्वर्गोत्तमादौद्विगुणइत्युपपन्नम्।रिपुराशौत्रिभागोनमि
तिसारावल्यामभिहितत्वाच्छत्रुराशौत्र्यंशहानिः।छेदघ्नरूपेषुलवाधनर्णमेकस्यभागाअधिकोनकाश्चेदितिपाटी
सूत्रेणतलस्थहारेणेत्यादिनावासमच्छेदसूत्रेणवासिद्धेनत्र्यंशोनंरूपगुणेनत्र्यंशहानिरेवभवतीति।त्र्यंशोनंरूपं
$\frac{2}{3}$ गुणः। अधिशत्रुराशौअर्द्धशत्रुत्वस्याधिक्यात्त्वार्द्धसहिततृतीयांशस्यप्रागुक्तसूत्रैःसिद्धस्यार्द्धात्मकस्यह्रासः अ
र्द्धरूपाच्च्युतोजातोधिशत्रुराशावर्द्धमितोगुणः $\frac{1}{2}$ एवंमित्रराशौयुक्त्यातृतीयांशस्यवृद्धिः।तलस्थहारेणेत्यादिनासि
द्धेनत्र्यंशाधिकरूपेणगुणेनत्र्यंशोपचयएवभवतीतिसत्र्यंशंरूपं $\frac{4}{3}$ गुणः।एवमधिमित्रतायाआधिक्यात्त्वार्द्धयुत राम:
त्र्यंशस्यपूर्वसूत्रेणसिद्धस्यार्द्धात्मकस्यवृद्धिः।इयंरूपान्विताजातोधिमित्रराशौगुणः $\frac{3}{2}$ समगृहेसमोर्द्धमित्रमर्द्धश ६०

सुस्थेतिपक्षेद्वृद्धिर्मित्रत्वाद्यावतीवृद्धिरर्द्धशत्रुत्वात्तावतीहानिरितिहानिवृद्ध्योरभावाद्रूपंगुणः१समोनमित्रंनशत्रुरिति

५क्रं धिनवृद्धिर्नापिहानिः।अतोरूपमेवगुणइतियुक्तम्।लघुजातकेसासवल्यामध्यंशासुषिशत्रुराशौवक्रंविहायपह

निःस्यादितिनोक्तम्॥क्वचिदुक्तमप्यस्ति।तन्मतेभेदेऽत्रपूर्वमतमेवाङ्गीकृतमितिप्राञ्चः।अथशत्रुमित्रादिराशौस्वनवांशे

स्वद्रेष्काणेवास्थितेस्वराशौशत्रुमित्रादीनांनवांशेद्रेष्काणेवास्थितेग्रहेसामान्यप्राप्तेगुणेराशिनवांशद्रेष्काणकृततार

तस्यांहेलस्पष्टंयुक्तमेवंहोरादितारतम्यादपि।समग्रएवगुणेसप्तवर्गकृततारतम्यविधिस्वीकारेत्वनन्तायुक्ताबहुव

शौंऽस्याद्ततःकारणाद्विभक्तेएकस्मिन्गुणेराश्यादिस्थानेषुविभागेनावस्थानमागतम्।इहहोरादयःषट्समाएवरा

शेऽस्तुहोरादिवर्गाद्विगुणंगृहमितियवनवाक्येद्विगुण्यमस्तीत्यष्टौवर्गास्तेनाष्टभक्तोगुणोहोरादिवर्गेषु।अयमष्टभक्तो 6

द्विगुणाद्धनुर्भकगुणात्मकोगुणोराशिस्थानेस्यादितिसिद्धम्।अतःसम्यगुक्तंश्रीपतिभिः।वर्गोत्तमेस्वभवनेस्वनवां

शकेचस्वत्र्यंशकेचगुणकोद्वितयंनिरुक्तः॥अध्यर्द्धरूपमधिमित्रगृहेसुहृद्भेसत्र्यंशकंसमगृहेखलुरूपमेव॥१॥

ंशोनितंरिपुगृहेध्यरिभेदलंस्यादेभ्योगुणोभवतियःखलुकश्चिदेकः॥वेदोद्धृतःसभगुणोगणकैर्निरुक्तोहोरादिव

गुणाकस्तुभवेत्तदर्द्धमिति॥२॥अथाधिमित्रस्वस्वमित्राभ्यांक्रमादर्द्धन्यूनत्वाद्द्व्यधिकत्वमितिपूर्वयुक्त्यास्वगृहमित्र

श्रीम. ग्रहगुणयोरनयो २/४ रन्तराद्वैऽस्मिन् १/३ स्वगृहगुणाद्दूनेमित्रगृहगुणेवायुक्ते जाते। धिमित्रसंबन्धिनिसप्तवर्गेगुणः
६१ ५/३ मित्रसंबन्धिवृद्धिर्निजाईसहिता। धिमित्रसंबन्धिवृद्धिरत्रविलोमविधिनातृतीयांशोनाधिमित्रसंबंधिवृद्धिर्मित्रसं
बंधिवृद्धिर्भवतीत्यधिमित्रसंबन्धिवृद्धिरियं २/३ स्वतृतीयांशेनानेन २/९ ऊनाजातामित्रसंबन्धिवृद्धि ५/९ रनयाप्राग्वद्गु
णोयं १/९ मित्रसंबन्धिनिसप्तवर्गेसमसंबन्धिनितुरूपमेवामित्राधिमित्रयोर्यावतीवृद्धिस्तावत्येवामित्राध्यमित्रयो
र्हानिरितिजातौशत्रुसंबन्धिनिअधिशत्रुसंबन्धिनिसप्तवर्गेक्रमाद्गुणौ ५/९। १/३। स्वसंबन्धिनिहितयंगुणोस्त्येवा। एवंसि
द्धेराश्यादिसप्तस्थानस्यगुणाएभिर्गुणकैर्गुणनीयाइत्युपपन्नम्। अतएवोक्तम्। गृहादिकेवर्गगणेस्वकीयेद्विकोगु
णस्त्र्यंशविवर्जितः सः॥ अधीशभेमित्रगृहेनवांशाविश्वेचरूपंचसमस्यगेहे॥१॥ नवांशकाः पञ्चविरोधिराशेगुणांश
काः स्याद्धिवैरिणोभे॥ पूर्वंभपूर्वागुणकायउक्तावर्गेषुसप्तस्विहगुण्यसंज्ञाः॥२॥ गुण्यागुणैः स्वैरधिकारलब्धैरु
क्तैर्गुणः स्याद्थमिश्रितैस्तैः। स्यातोबुधैराश्रयसंज्ञितोयमिति॥ यत्रवर्गोत्तमस्वनवमांशस्वद्रेष्काणान्यतस्वशान्स्वोद्दि
गुणः प्राप्तस्तत्रशत्रुक्षेत्रेत्र्यंशमित्यादिनाजातकवाक्येनशत्रुभेहानिः परिणामेनगुणात्मिकाधीन्मित्रभादिषुवृद्धिरपिप्रा रामः
प्तातदत्रैकाश्रयगुणसिद्ध्यर्थंसंपूर्णद्विमितगुणेयथाप्राप्तांहानिंवृद्धिंवाविधायपश्चाद्स्यराश्यादिसप्तस्थानस्थापना। ६१

द्विविधिरितिप्राप्तौ सत्यामुच्यते। इयं हानिर्वृद्धिर्वा परिणामेन गुणात्मिकास्तीति राशिवशाद्वर्गोत्तमादित्रिकान्यत
मवशादत्र गुणद्वये प्राप्ते आचार्यकलत्रबहुप्रदायामेकं तु यद्भूरि तदेव कार्यमिति वाक्येन पुनः सकृद्गुणकस्य नि
यमनाद्धानिवृद्ध्यात्मकगुणकस्य बाधः प्राप्तः जातके हानिवृद्धित्वपुरस्कारेणोक्तत्वाद्बाधोपियुक्तस्तदबाधोवा
धश्च यथा स्यात्तथा प्राप्ते अत्र राशिवशाद्धानिवृद्धिः प्राप्तास्तीति राशिस्थानस्थराशिगुणमात्रे नियोज्या। राशिवशाद्धानि
वृद्धिस्तु राशिस्थानस्थराशिगुणमात्रे होरादिवशाद्धोरादिस्थानस्थहोरादिगुणेषु तारतम्यसिद्धसंप्तवर्गगुणकल
सणान्नियुक्ते वास्ति। एवमबाधः सार्थकः। बाधस्तु राशिगुणातिरिक्तहोरादिस्थगुणेषु सार्थकः। ततो गुणत्वेन प
रिणतया हानिवृद्ध्या राशिस्थराशिगुणं गुणयित्वा पुनरावश्यकत्वेन तारतम्यप्राप्तसार्वदिकगुणैर्गुणनमिति सिद्ध
म्। स्वराशिस्थे वर्गोत्तमादित्रिकान्यतमस्थे च ग्रहे राशिवशाद्वर्गोत्तमादिवशादपि द्विमितगुणप्राप्तौ सकृद्गुणनमि 61
ति वाक्येनैकस्यैव गुणकस्य नियमनात्परद्विगुणस्य सर्वथाबाध एवं तद्धि हेनैव पुनर्गुणनमिति बोध्यम्। अथैवं
राशिस्थानस्थगुणमात्रे पुनरधिमित्रादिगुणकापेक्षायां प्रथमगुणकैः परगुणकैर्वा गुणनीयमिति संदेहादेकतर
प्रस्थानवलम्बेयुक्त्या गुणकान्तराणि साध्यन्ते। यथा प्रथमोऽधिमित्रगुणः ३ द्वितीयः ५ अत्र यदि गुणयोरनयोरेका

मौ॰ सं॰ कारत्नाभविम्बूतदान्यतरेणैव चरितार्थताजातास्यादिदानीं त्वनयोरेकाकारतायुक्त्या योगाद् विभान्तेति क्रमिकयोरन
६२ योर्योगाद् १९/१२ गुणो युक्तः। अन्यच्च। प्रथममित्रगुणात्प्रथमोऽधिमित्रगुणः सिद्धो द्वितीयसिद्धौ जातायामधिमित्रसं
बन्धिवृद्धिस्तृतीयांशेनामित्रसंबन्धिवृद्धिरित्यधिमित्रवृद्धेस्तृतीयांशे मित्रगुणे योजिते सत्यधिमित्रगुणो भवतीति सु
त्वाधिमित्रसंबंधिवृद्धेरस्या ३ स्तृतीयांशो ३ यदधिमित्रगुणानपेक्षे प्रथममित्रगुणेऽस्मिन्नेव ४ योज्यते तदप्रम
प्यपरोऽधिमित्रगुणो युज्यते १४। एवं पुनरपि गुणद्वये संदेहस्तादवस्थ्यादनयो १९/१२ । १४/६ योर्योगाद् स्फुटोप्येकोऽधिमित्रगुणः
सिद्धः। अत्र १९/३ हारांशयोर्द्विसप्ततिसप्तमांशेन ७२ अपवर्तिते कृते लब्धा हरस्थाने सप्त ७ अंशस्थाने स्वल्पान्तरमुपे
क्ष्य सार्धा एकादश। एवमयं गुणोऽधिमित्रराशौ ११ अस्य वृद्ध्या ४ स्वत्र्यंशेनया २०/२१ प्राग्वदयं मित्रगुणः २०।२१ सम
गुणो रूपमेव १ मित्राधिमित्रयोर्यावती वृद्धिस्तावत्येवामित्राध्यमित्रयोर्हानिरिति शत्रुगृहगुणा १३/२१ धिशत्रुगुणौ
३ अतः सम्यक्त्वं श्रीपत्याचार्यैः। नवांशकारुद्रमिताऽधीशराशौ सुहृद्गृहे सनिमूर्छनांशाः। नवाश्विनो रूपमुदासराशौ
कुद्वंशका विश्वमिता द्विषद्भे॥ त्रयो नगांशा ह्यधिशत्रुराशावेते भसंज्ञा निजराशिवर्जम्॥ वर्गोत्तमात्मीयनवांशदृक्कृस्थि राम॰
तिग्रहे तु द्वितयं गुणः स्यात्॥ एतैरधीष्टादिगुणैर्निहन्याद् दृष्टिं राशिगुणं पुनस्तमिति॥ इत्याश्रयगुणोपपत्तिः सुन्दरमि ६२

श्चोदिता॥ प्रकृतमनुसरामः॥ स्वगृहे गुणकः २ षेदोद्धृतः स भगुणो गणकैर्निरुक्तो होरादिवर्गगुणकस्तु भवेच्च तद्वदिमिस्तु
केरष्टमष्टभक्तो १/४ जातः अयमनन्तरताडकेन द्विकेन गुणितो जातः स्वसंबन्धिनि होरादिषड्वर्गगुणः १/२ अत्रांशहारयवष्टा
दशभिर्गुणितो १८/३६ जातोऽयं स्वहोरादिषड्वर्गगुणः। एवमधिमित्रगृहे गुणः ३/२ अष्टभक्तः ३/१६ अनन्तरताडकेन ५/३ गु
णितो जातो १५/४८ ऽधिमित्रसंबन्धिहोरादिषुगुणः। एवंमित्रगेहगुणो ४/३ ष्टभक्तो १/६ नन्तरगुणेन १३/२ गुणितो जातो मि
त्रसंबन्धिनि होरादिषड्वर्गगुणः १३/५४ एवं समगृहगुणो ऽष्टभक्तो ऽनन्तरताडकेन गुणितो जातः १/८ एतस्य हरांशयोर्नवभि
र्गुणने जातो [illegible] १/२ एवं शत्रुगृहे गुणो ३/२ ष्टभक्तो ३/१६ नन्तरताडकेन ५/३ गुणितो जातः शत्रुसंबन्धि होरादिवर्गगुणः
५/१०८ एवमधिशत्रुगृहे गुणो १/२ ष्टभक्तो १/१६ नन्तरताडकेन ३ गुणितो जातः १/४८। अत्रांशहरयोस्त्रिभिर्गुणने जातोऽधि
शत्रुसंबन्धिनि होरादिषड्वर्गगुणः ३/१४४। एवमेते गुणाः स्वाधिमित्रादिगृहस्थे ग्रहे सति स्वाधिमित्रादिसंबन्धिहोरादिस्थानीसाभा
गतौ। एवमन्यराशावन्यहोरादिस्थग्रहे तत्र स्वगुणकाः स्थाप्याः। राशिगुणस्थाने होरादिगुण इति राशिस्थाने वृद्धिगुणाः स्थाप्याः।
पक्षावे बांयोगे कृते आश्रयगुणको भवतीत्युपपन्नम्। दर्शनम्। ननु न ह्यस्ति राजनि द्वे
योयेन [illegible] नाधिवैरिसंबन्धिहोरादिगुणानामेव हारांशाः क्रमेण। दशानव त्रिभिर्गुणो

| स्व० | अधि | मि० | स० | श० | अ० |
|---|---|---|---|---|---|
| १८/३६ | १५/४८ | १३/५४ | ९/७२ | ५/१०८ | ३/१४४ |

62

प्री॰म॰ नीयाअ ॥नुनहन्तव्यांद्रितस्मादष्टादशादिभिर्गुणनंव्यर्थम्।नचयावानेवाष्टादशानांषड्विंशांशस्तावदेवरूपस्य
६३ द्वैमिस्यादिफलेविशेषाभावादष्टादशादिभिः स्वादिगुणहारांशगुणनंसार्थकमेवेतिवाच्यम्।गुणान्तरेऽपिसमाङ्केन
हारांशगुणनेफलावैचित्र्यदर्शनादुक्तदोषतादवस्थ्यात्।तस्मादष्टादशादिभिःस्वादिगुणहारांशगुणानांहारां
शगुणनंगौरवान्निष्प्रयोजनत्वाच्चव्यर्थमेव।अस्तुवास्वसमाधिशत्रुगुणकानामेवसमाङ्केनहारांशगुणनम्।परंतु
अष्टादशादिभिरेवहरांशाहन्तव्याइतरैर्नहन्तव्याइदमपिशिष्यबन्धनमात्रम्।किंचमित्रराशौमित्रहोरास्थेग्रहे
यावान्होरास्थानीयोगुण १३ स्तावानेवशत्रुराशावपिमित्रहोरास्थेग्रहेगुणःस्यादित्युक्तंतदप्यसंगतम्।यत
स्तत्रशत्रुराशिमित्रहोराजन्येनगुणान्तरेणभाव्यम्।अन्यथामित्राधिमित्रादिगुणसाधनप्रयासवैयर्थ्यापत्तिः।अपि
च।सप्तवर्गस्यापितानांसर्वेषांगुणकानांयोगःकार्यइत्युक्तं तत्रपृच्छ्यते।किंसर्वेगुणकाःसदृशच्छेदाविसदृश
च्छेदावा।आद्येकिंसार्वत्रिकाःकादाचित्कावा।नाद्यः।सर्वत्रसर्वगुणकानांसमच्छेदत्वस्यबाधितत्वात्।नापरः।
भौमादीनांहोराधिपत्यभावात्पुष्पवतोस्त्रिंशांशाधिपत्याभावाच्चकादाचित्कस्यापिसमच्छेदत्वस्यासंभवात्।नापिच राम:
रमः।असमच्छेदानांयोगस्यायुक्तत्वात्।अन्यथायोगोऽन्तरंतुल्यहरांशकानामितिसिद्धान्तोव्याहन्येत। तस्मात्सप्त ६३

वर्गस्यगुणानामैक्यंकार्यमित्युक्तम्॥ अत्रकेचित्। नद्विवर्यंसप्तवर्गस्यगुणकानांसमच्छेदत्वंब्रूमो येनभवदुक्तो
दोषःप्रसज्येत। किंतुविसदृशाहराएवगुणास्तेषांसमच्छेदान्विधाययोगःकार्यइतिवदामस्तेनसर्वंसमञ्जसमे
वेति। स्यादेतत् समच्छेदविधानेनयोगःकार्यइत्याचार्येणप्रयुक्तंस्यात्। तस्मात्कथमेतदितिदुस्तरजातकार्णवसंदे
हतरङ्गसङ्गभङ्गितहृदयाहोरिकामिथःपरिभाषन्ते। अत्रब्रूमः॥ यस्मराशौग्रहस्तस्यैवचेद्धोराद्रेष्काणान्यतमवर्गे
स्याच्चदातत्रापिताथानेवगुणकोऽयतद्गुणकराशिगुणकयोःसमच्छेदत्वाद्योगोपियुक्तएवेत्यत्रनकोपिविवादः।
होरास्यगुणकेस्याभगुणकस्यांशमात्रद्वैगुण्येपिसदृशच्छेदत्वमव्याहतमेवेतिहृदयम्। अथान्यराशावन्यहो
रादिस्थेग्रहेत्रैराशिकेनगुणान्तराणियावत्साध्यन्तेतावत्तएवसमानराशिहोराद्युक्तगुणाउत्पद्यन्तेकिंतुराशिगुण
हरतुल्यहराअतस्तएवगुणकाःस्थाप्याःसमच्छेदत्वाद्योज्याश्चेतिसर्वमुपपन्नम्। सप्तवर्गगुणानांसमच्छेदत्वे
सिद्धेसर्वैर्गुणकांशयोगएकेनैवहरेणभाज्यइतिलाघवाद्गुणकांशाएवस्थापिताः पश्चात्तेषांयोगोराशिगुणस्य
हरेणैवभाज्यइतिसम्यगुक्तमाचार्यचरणैः॥ ॥अत्रोदाहरणम्॥ रवेःसप्तवर्गस्वामिचक्रंसप्तवर्गस्यगुणकचक्रं च

अथ

| रा | हो | द्रे | स | न | द्वा | त्रि |
|---|---|---|---|---|---|---|
| बुधः<br>शत्रुः | चन्द्रः<br>समः | बुधः<br>शत्रुः | भौम<br>अमि | गुरुः<br>सम | भौमः<br>अमिः | बुधः<br>शत्रु |

शत्रुसंबन्धिहोरादिस्थोऽयंगुणो ५/१८ द्विगुणोजातो

प्रै॰म॰ ह्रसंबन्धिगुणः १०/१०८ । अत्रांशस्थाने दशसन्तीतितेस्थापिताः पश्चात्सद्गुण धृतिभि

६४ र्भाज्याद्द्विसुष्टूक्तद्रेष्काणत्रिंशांश योरपिशत्रुसंबन्धित्वात्तत्रापिसरावगुणकः

| ग | हो | द्र | स | न | द्वा | त्रि |
| --- | --- | --- | --- | --- | --- | --- |
| १० | ९ | ५ | १५ | ९ | १५ | ५ |

५/१०८ । समच्छेदत्वात्तद्योगोपियुक्तएवेतिनकिंचिद्विरुद्धम् । अथहोरास्थानस्थगुणः साध्यते । तत्रसमराशिस्थेसति

समहोरास्थोगुणः । ६/३ । अपेक्षितस्तुशत्रुराशौसमहोरायां गुणइतिशत्रुराशिपरिणामोस्यगुणस्यन्याय्यः । तत्रत्रैरा

शिकम् । यदिरूपचतुर्थांशमितेसमग्रहगुणेयंहोरास्थानस्थगुणो ६/२ लभ्यतेतदारूपषडंशमितेशत्रुग्रहगुणके

कियानिति । अत्रच्छेदलवंचपरिवर्त्येत्यादिनाजातोयंगुणः शत्रुराशौसमहोरायाम् ६/१०८ । अत्रांशस्थानेनवातोन्यरा

शावपिसमहोरायांनवैवस्थाप्यादित्युपपन्नम् । हरोपिराशिगुणस्यहरेणतुल्यइतिसमच्छेदत्वाद्योगोपियुक्तएव । किं

चयदिपूर्वंसमसंबन्धिहोरास्थोगुणकोनवभिर्नगुण्यतेतदाशत्रुराशौसमहोरायांगुणः । १/१२ । अस्यपुनाराशिगुणेन

साकंयोगेक्रियमाणेमिथोहराभ्यामित्यनेनसमच्छेदत्वकरणमावश्यकम् । तत्रद्वादशभिरष्टोत्तरशतेपवर्तितेनव

लब्धास्तैरूपद्वादशांशमितगुणकस्यहारांशगुणनेजातः सएवगुणः ६/१०८ । एवमग्रेसमच्छेदत्वकरणावसरेसमग्र रामः

हगुणोनवगुणोभविष्यतीतिपूर्वमेवमहामतिभिराचार्यैर्नवगुणः प्रोक्तइतिनकोपिदोषइत्यवगच्छ । एवंसाधि ६४

वैरिगुणकयोरपिधृतित्रयाभ्यांगुणनंनानर्थकमित्युदाहरणेन बोध्यम्। अथ शत्रुराशावधिमित्रसप्तमांशेगुणोनुपातेन।
यद्येतावति ३/२ अधिमित्रगृहगुणेयमधिमित्रसप्तांशगुण १५/४ स्तदा शत्रुगृहगुणेस्मिन् १/६ कियानितिच्छेदं लवं च प
रिवर्त्येत्यादिना जातः १५/१६ स एव गुणको राशिगुणस्य हरतुल्य हरो तस्त एव गुणकाः स्थाप्याः पश्चाद्राशिगुणस्यैव ह
रेण हरणीयाद्गति सर्वं परिच्छिन्नम्। अथ वर्गोत्तमस्वांशत्र्यंशगते ग्रहे गुणो द्विमितो वेदाद्भुतो जातो भगुणको ३/२ मि
तः १/२। यदि तत्तद्गृहे गुणे तच्चद्वो राशिगुणको लभ्यते तदास्मिन् ३/२ मिते वर्गोत्तमादिगुणे किमिति त्रैराशिकेन गुणान्त
राणि साध्यन्ते तावन्त एव गुणाः षड्विंशत्तुल्यहरा उत्पद्यन्ते। गृहस्थानेपि पूर्वप्रकारेण यो गुणकस्तद्धरस्थाने यावत्ष
ड्विंशत्स्थाप्यन्ते तावद्वर्गोत्तमान्यतरवशात्प्राप्तगुणकानन्तरवाडकघाततुल्य एव गुणक उत्पद्यते। अतस्तत्राङ्कयोगं
षड्विंशतैव भजेन्न तु प्रोक्तहरेणेत्यपि साधु। अथ वर्गोत्तमादित्रिकान्यतमस्थो ग्रहो यद्यधिशत्रुगेहे भवति तदा गृहगु
णकस्यास्य ३/२६ त्र्यो नगांशाद्यधिशत्रुराशावित्युक्तेरयं गुणः। ३/ तत्र गुणनं खण्डाभ्यामपि संभवतीत्येतत्खण्डद्व
यं कृतं तत्रैकं मे ३/ । अपरं च ४/ । तत्र प्रथमखण्डेन गुणने गुणहरयोस्तुल्यत्वान्नाशे कृते पूर्वानीतः आश्रयगुणको
लब्धः। द्वितीयखण्डेन तु राशिगुणेंशाहतिश्छेदवधेन भक्तेति भिन्नगुणनरीत्या गुणिते चतुर्भिरपवर्तिते च गृहाङ्कः स्ये

64

ग्रै.म. ष्याधनखण्डगुणितत्वादृणगतस्य त्रिषष्टितमो भागो भवतीति गृहाङ्कः त्रिषष्टिभागोनः पूर्वानीताश्रयगुणको वास्तव
६५ आश्रयगुणो भवतीत्युपपन्नम्। एवमपि मित्रगृहे गुणः। ५५/५। अस्यापि खण्डद्वयं विधाय गुणने गृहाङ्कः त्रिपञ्चांशदश
वभवतीति सिद्धमेवोक्तम्। परमिह्यांस्तु विशेषः। अत्र सप्तचतुर्मित एकादशानां धनखण्डे कृते —— त्रिषष्टिभागोऽप्य
न्तरितोऽथ शत्रुगृहे गुणः १३/३४ अयमीदृशः कल्पितः ३१/३२। अनेन पुरानीताश्रयगुणेन गुणने गुणकभाजकयोः सम
त्वादपगमे कृते स एव जातो :। गुणकांशस्थाने ष्टावधिका गृहीता दश्यष्टानामेकविंशत्यंशेन गुणितराशिगुणा १०/३६
लब्धं पुरानीताश्रयगुणाच्छोध्यं तत्र षट्त्रिंशदेकविंशतितुल्यहरयोर्घातस्यास्य ७५६ मानत्वे ८ रपवर्ते कृते ल
ब्धमासन्नं चतुर्नवतिः ९४। ३० स्वल्पान्तरत्वाच्चतुर्नवतिमेव गृहीत्वा गृहाङ्कः चतुर्नवतिभागोनः पूर्वानीताश्रयगुणकः का
र्य इत्युपपन्नम्। अथ वर्गोत्तमादित्रिकान्यतरस्थो ग्रहो यदि मित्रगृहे भवति तदायं गुणकः। ३६/३१। अस्यापि धन
खण्डे कृत्वा गृहाङ्कः चतुर्नवतिभागान्वितः पूर्वाश्रयगुणो वास्तवो भवतीति निष्पन्नम्। वासनाबोद्ध्यास्त्वधिरि
सुहृद्दे त्रिषड्लब्धो नो मित्रारिभे तु चतुर्नवत्यंशयुतो गृहाङ्कः कार्य इति वदन्ति तदतीव तुच्छमित्यवगच्छ। स ग्र.म.
मगृहे तु रूपमुदासराशावित्युक्तत्वाद्रूपेण गुणने विकृतत्वाद्यथास्थित एव गुणकः। स्वराशिस्थे वर्गोत्तमादित्रिका ६५

न्यतमस्मिंश्च ग्रहे राशिवशाद्भागोत्तमादिवशादपि द्विमितगुणकप्राप्तौ सकृद्गुणमिति वाक्ये नैकस्यैव गुणकस्य नियम
नादपरद्विगुणसर्वेषामबाध एवाम्तः सम्यगुक्तं स्वेसमे केवल इति॥ इत्याश्रयगुणकोपपत्तिः॥ कर्मयोग्यगुणकमा
ह॥ ॥ तत्स्फुटहतेर्मूलं सयोग्यो गुणः॥ ॥ स्पष्टम्। उपपत्तिः प्रागुक्तैव॥ अंशायुर्दायोपयोगिदायांशाना
ह॥ ॥ खेदानांच मनोर्लवाः स्वयुगहृच्छेषाद् हांशायुषः॥१८॥ ग्रहाणां लग्नस्य च लवाश्चत्वारिंशद्भक्त
शेषाः सन्तोंऽशायुषो लवा भवन्ति॥ अत्रोपपत्तिः॥ ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यमित्युक्ते
र्मेषनवमांशस्थे ग्रहे एकं वर्षमायुर्वृषांशस्थे द्वे वर्षे एवं क्रमेण मीनांशे द्वादश वर्षाणीति निर्णीतम्। तत्र मेषादेश्च
त्वारिंशदंशान्ते मीनांशान्तो भवतीति चत्वारिंशदंशैरेकः परिवर्त्तो लभ्यते तदिष्टे ग्रहलग्नांशैः कतीति चत्वारिंशद्भ 65
क्ता ग्रहलग्नांशा गतपरिवर्ताः स्युः शेषो वर्तमानपरिवर्तस्य गतं भवति। कलानां द्विशत्यै २०० कोनवांशस्तत्तुल्या
न्येव वर्षाणीति द्विशतकलाभिरेकं वर्षं तदा दायांशापरपर्यायशेषांशकलाभिः किमिति। वर्षाद्यमंशायुर्भवति। अत
एवं वक्ष्यते। दायांशोत्थकलाः स्वयोग्यगुणकघ्नाः खाभ्रनेत्रोद्धृता इति। अतः सर्वं सयुक्तिकमेव॥ अथ चक्रार्द्धहानिमा
ह॥ ॥ षड्भाल्पे सति रवेश्चरोन उदयेऽस्यांशोद्धृतैः खाग्निभिस्त्वेकाल्पे स्यच्चरखाग्निभाजितलवैः सौम्यो

ग्रे॰ल॰ नितेत्वर्द्धितैः उनाभूर्गुण एकभे द्विबहुत्वेकस्य बह्वोजसः कार्यास्तद्गुणिताः स्वदायजलवाश्चक्रार्द्धहा
६६ निस्त्रियम् ॥१८॥ खेचरो न उदये षड्भाल्पे सति अस्यांशोद्धृतैः खाग्निभिरूनाभूर्गुणः स्यादित्यन्वयः। अयमर्थः। ग्रहो
लग्नाच्छोध्यः शेषं यदि षड्भाधिकं तदा नैषा हानिः। यदि च षड्भाल्पं तर्हि अस्य षड्भाल्पस्य खेचरोनोदयस्य राशयस्त्रिं
शता गुण्या अधः स्थांशयुक्ता अंशा भवेयुस्ते त्रिंशद्भाज्या लब्धेन भूरेकः हीनः कार्यो गुणकः स्यात्। तुर्विशेषे। एकाल्पे
खेचरोनोदयेंऽशस्य खेचरोनोदयस्य खाग्निभिस्त्रिंशता भाजितलवैरूनाभूर्गुणः स्यात्। तुर्विशेषे। सौम्योनिते उदये शुभ
ग्रहोने लग्ने कृते सति अर्द्धितैरंशोद्धृतैः खाग्निभिरर्द्धितैः खाग्निभाजितलवैर्वा उनाभूर्गुणः स्यात्। तुर्विशेषे। एकभे द्विब
हुषड्ढिन्यादिषु ग्रहेषु सत्सु बह्वोजसः एकस्यैव गुणः कार्यः। बहु ओजो वीर्यं यस्येति बह्वोजास्तस्य। एकराशिस्थानां म
ध्ये यो रूपषष्ठ्यंशाधिकबली तस्यैव गुणः कार्य इत्यर्थः॥ यदा तु रूपषष्ठ्यंशादिबलसाम्यं स्यात्तदा सर्वेषामपि गुणः
कार्य इति मिश्राः प्राहुः। वस्तुतस्तु नैसर्गिकबलमेतद्बलसाम्ये स्यादधिकचिन्तेति लघुजातकसारावल्याद्युक्तेरेकस्थे
कर्क्षगेष्वेक इति गर्गोक्तेश्च यस्य निसर्गबलमधिकं तस्यैव गुणः साध्य इति अत्र विषष्ठ्यंशस्यातिसूक्ष्मत्वाद्रूपषष्ठ्यंश राम:
पर्यन्तं चक्रार्द्धहानिर्भवेत्। गुणकेन दायांशगुणने परिणामे हानिरेव भवतीति भावः॥ चक्रार्द्धहानिर्नाम चक्रपाताद्दे ६६

हानिः।पातोविपरीतस्तद्विपरीतत्वसंबन्धेनपातशब्दस्यविपरीताभिधेयेलक्षणाचक्रस्ययद्विपरीतार्द्धंतत्संबन्धिनी
हानिरित्यर्थइतिमिश्राः॥अत्रोपपत्तिः॥बृहज्जातके॥सर्वार्द्धत्रिचरणपञ्चषष्ठभागाःक्षीयन्तेव्ययभवनादसत्सुवाम
म्॥सत्स्वर्द्धंह्रसतितथैकराशिगानामेकोंशंहरतिबलवान्तथाहसत्यः॥लग्नाद्द्वादशेराशौपापग्रहेसंपूर्णायुर्हानिरेकाद
शेऽर्द्धा युर्हानिर्दशमेतृतीयांशस्यनवमेचतुर्थांशस्याष्टमेपञ्चमांशस्यसप्तमेराशौआयुषःषष्ठांशस्यहानिः॥शुभग्र
हेतुलग्नाद्द्वादशराशौस्थितेऽर्द्धहानिरेकादशेचरणस्यदशमेषष्ठांशस्येत्यादि।द्वादशेसर्वत्रसंपूर्णाहानिर्नयुक्ताक
चिदेकत्रयुक्तातस्माद्यावतिमेषादिभागेलग्नंलग्नाद्द्वादशेपितावत्येवमेषादिभागस्थितेग्रहे [illegible] त्सर्गसिद्धयुक्ता 66
त्मकस्थानाद्द्वादशाख्यमेषादिसंज्ञव्यावहारिकराशेरवस्वभावाद्यथोक्तवदेकादशराश्यन्तरेलग्नार्वाचीनैकराश्यन्त
रात्मकेसर्वोभागोहीयते।सर्वेषुजातकतन्त्रेषुभागपर्यायपदपर्यन्तधावनात्सर्वोपिभागएकरूपहरेणायातीत्ये
करूपहरः।एवंदशराश्यन्तरेलग्नार्वाचीनद्विराश्यन्तरात्मकेऽर्द्धभागःक्षीयतेऽर्द्धभागोपिद्विरूपहरेणागच्छतीतिरू
पद्वयंहरः।एवंक्रमिकनवभान्तरेर्वाचीनत्रिभान्तरेत्रिरूपंहरः।अष्टभान्तरेर्वाचीनचतुर्भान्तरेचतूरूपंहरः।सप्तभा
न्तरेर्वाचीनपञ्चभान्तरेपञ्चकंहरः।लग्नात्षड्भान्तरेषड्रूपंपरमोहरः।अर्थादन्तराभावेह्रासाभावः।तस्माल्लग्नार्वाची

प्रे॰ भ॰ ६७ नैकराश्युपचयादेकद्दरोपचय इतिसिद्धम्।अथानुपातः।यदित्रिंशदंशैरेकरूपं १ हरस्तदेष्टखेचरोनोदयराश्यं
शतुल्यैर्लग्नार्वाश्रोप्यमस्यंशैः किमिति खेचरोनोदयांशात्रिंशदंशोहरः इतिनिष्पन्नम्।अनेनैनसच्छेदे नहरेणायुर्ले
वाभाज्यालब्धमायुर्लवेभ्यःशोध्यमितितत्र छेदं लवं च परिवर्त्यहरस्यशेषःकार्योथभागहरणेगुणनाविधिरितिसूत्रे
णहरभक्तायुर्लवाः शोध्यजातम्।आ॰ल ३० अत्रायुर्लवास्त्रिंशतागुणनीयाः खेचरोनोदयांशैर्भाज्याअथवाखेचरोनो
दयांशभक्तत्रिंशतागुणनीयाइतिनिष्पन्नम्। तत्रखेचरोनोदयांशभक्तत्रिंशद्गुणाआयुर्लवाआयुर्लवेभ्यःशो
ध्याः खेचरोनोदयांशभक्तत्रिंशदूनरूपगुणायुर्लवावाफलंसममेव। तद्यथा।आयुर्लवाः १० खेचरोनोदयांशाः
६० खेचरोनोदयांशा ६० भक्तत्रिंशता ३० आयुर्लवागुणितालब्धमायुर्लवेभ्यःशोधितजातम् ५।यद्वाखेचरोनो
दयांशभक्तत्रिंशदूनंरूपेणानेन०।३० आयुर्लवागुणिताःफलंसममेवजातम्।५।अतःषड्भाल्पेसतिखेचरोनउद
येस्यांशोद्धृतैः खाग्निभिरूनाभूर्गुणः स्यादितियुक्तमुक्तम्।एकाल्पेतुखेचरोनोदयेत्रिंशद्गुणायुर्लवेभ्यस्त्रिंशद
ल्पखेचरोनोदयांशैर्भागेह्रियमाणे फलमायुर्लवाधिकमायुर्लवेभ्योनशुद्ध्यतीतिव्यस्तत्रैराशिकं कर्तुमुचितमतः
खाग्निभाजितलवैरूनाभूर्गुणइत्यपिसुष्ठूक्तम्।सत्खर्द्धह्रसतीत्युक्तेःसौम्योनितेलग्नेऽद्धितैः खेचरोनोदयां रामः ६७

शभक्तत्रिंशद्भिः खाग्निभाजितलवैर्वा नाभूर्गुणः स्यादित्यपि नितान्तं कान्तम्। अनेन गुणेनाप्यंशा गुणनीया अतस्त
द्गुणिताः          स्वदायजलवादत्युपपन्नम्। अत्र केचिद्भाववशाच्चक्रार्द्धहानिं कथयन्ति स्म तन्मतमाचा
र्येण न स्वीकृतम्। गर्गसत्याचार्यवराहकल्याणवर्मादिभी राशिपर्यायपर्यन्तं धावनात्। अतो यदुक्तं तत्सर्वं निरवद्य
म्। पद्धतिप्रकाशे। चक्रार्द्धहानिगुणः प्रकारान्तरेण मयोक्तः॥ एकाल्पके भद्विगुणांशतुल्यं रसाल्पके तद्धृतरूप
तुल्यम्। शोध्यं त[illegible]न का[illegible]तो गुणः स्यात्शुभोनिते शोध्यदलेन युग्वा॥१॥ खगोनलग्नदलस्य तु पञ्च[illegible]॥ शेषं स्फुटम्। आचा
र्योक्तप्रकारे त्रिंशता[illegible] पत्र नैकृत्वा सोपपत्तिस्तात्त्विकैरूह्या। विस्तरभयादस्माकमनुद्योगः॥ श्रीपति। पद्धतौ शुभग्न
हस्य रूपाल्प[illegible]रे[illegible]र्द्ध हृत तीति वृहज्जातकोक्तेऽर्हार्द्धरूपाच्छोध्यम्। यथास्थितहरोन रूपं ह[illegible]र्द्ध युक्तं वा गुणो ६७
भवतीति द्रष्टव्यम्[illegible]रामेंदरः। रूपाल्पकोर्द्धितो हारस्ततो रूपाद्विशोधयेदिति। हरखण्डेन संयुक्तो गु
णकः सद्गुणोऽथवे[illegible]। आदिशर्मणात्वज्ञातहानिकर्मणा लग्ने शुभोनिते हारगुणो द्विनिघ्नाविति वदता हरोन रूपं
द्विगुणं गुणो भवतीति स्वीकृतं तदसत्। लग्नराश्यादिसमे पापे सौम्ये वान्तराभावाद्धान्यभावदृतिहालिकोऽपि प्रति
पद्यते तत्र पापस्य हरः शून्यमिति रूपं गुण स्तेन दायांशानां गुणने दायांशा एव भवन्तीति न कापि हानिः। शुभस्य रू

प्रै॰म॰ द्विनिघ्नइतिरूपद्वयंगुणास्तेनदायांशगुणनेद्विगुणत्वंभवतीतियत्किंचिदेतत्। हानिगुणकेनगुणनेहानिरेवभवितु
६८ मर्हतीतिनश्रृद्धिरिति [illegible] पिजानाति। एवमन्यत्रापिव्यभिचरतीतिपरिहार्योयंपन्थाः। यदप्यायुष्मताखगोनलग्नेष
ड्भाल्पकुहृद्रं हृतेभ [illegible] उक्तंतद [illegible] ॥ तत्रराशयोभोद्विघ्नलवादिनायुक्ताहरोभवतीतिध्येयम्। यदपिगणेश
नाम्नाद्विघ्नहरोनरूपंगुणःस्यादित्यभिहितंतदपितुच्छम्। कदाचिद्द्विघ्नहरस्यरूपादप्याधिक्य [illegible] नरूपाच्चन्यूनसं
भवात्। रूपमेवतस्माच्छोध्यमितियदितथापिव्यभिचरतीतिधूलीकर्मणाप्रदर्शनीयम्। यत्तुभाव [illegible] गादादिशर्मणा
चक्रार्द्धहानिः [illegible] दसदितिप्राचोक्तंतदप्यसङ्गतम्। तदूनस्यतेनतथानङ्गीकारात्। सूर्येणक्षीणचन्द्रोत्रपाप
इत्युक्तंतदपिपद्धतिकारविरोधादयुक्तम्। प्रकृतमनुसरामः॥ अथांशायुर्दायसाधनमाह॥ ॥ दायांशोत्थक
लाःस्वयोग्यगुणकघ्नाःखाभ्रनेत्रोद्धृताअंशायुर्द्युसदांसमादितुतनोर्दायांशकास्माहताः॥ दिग्भक्ताश्च
समादिचेत्तुबलवल्लग्नंतदालग्नभैस्तुल्याब्दैस्सहितंद्विनिघ्नशरहृद्भागादितोमासयुक्॥ २०॥ यथाप्र
प्तचक्रार्द्धहानिसंस्कृतदायांशानांकलाःस्वकीयकर्मयोग्यगुणकेनगुणिताद्विशत्याभक्ताःफलमंशायुर्वर्षाद्यंभ रामः
वति। अयमभिसन्धिः। दायांशकलाद्विशत्याभक्तालब्धंवर्षाणिस्युः। शेषंसविकलंद्वादशभिःसंगुण्यविकलास्थाने ६८

त्यष्ट्याप्तंकलासुसंयोज्यद्विशत्याभक्तेमासाः।पुनःशेषंसावयवत्रिंशतागुणयित्वाविकलातःषष्टिलब्धमुपरिप्र
क्षिप्यशतद्वयेनभागे गृहीतेदिनानिस्युः।पुनःशेषंषष्ट्यानिहत्याधःस्थाङ्कयुतंद्विशत्याभजेल्लब्धंघटिकाभवेयुरेव
मग्रेपि।लग्नस्य दायांशास्त्रिगुणाःप्रोक्तरीत्यादशभिर्भाज्यावर्षाद्यंलग्नायुर्भवेत्।यदितुषड्रूपाधिकबलंलग्नंतदा
लग्नराशितुल्यवर्षैर्युतंकार्यम्।लग्नभागादेर्द्विगुणात्पञ्चभिराप्तेनमासादिफलेनमासादौचयुक्तंकार्यंतल्लग्नायुः
स्पष्टंभवति।यदालग्नबलंषड्रूपाल्पंतदानींदायांशास्त्रिगुणादशभक्ताएवलग्नायुःस्यादितितात्पर्यार्थः।बलषल्ल
क्षणंत्वल्पेहीनबलोबलीषडधिकइत्यग्रेवक्ष्यते।ग्रहायुःसाधनवासनायद्येकनवांशकलाभिर्द्विशतमिताभिर्२००
रेकंवर्षंतदेष्टं..यांशकलाभिःकिमित्यनुपातेनसुगमा।दशभिरंशैरेकोयोनवांशस्तत्तुल्यान्येववर्षाणि।तित्रीणिवर्षा
णिभवन्ति।अथानुपातः।यदिदशभिरंशैस्त्रीणिवर्षाणितदेष्टलग्नदायांशैःकानीत्यतउक्तंतत्त्रिनोदायांशकाःस्त्र्याहतादि
ग्भक्तावृतिर्वायांस्त्रिवांशैराशिसमंचहोरेतिवृहज्जातकोक्तेर्लग्नभैस्तुल्याब्दैःसहितमित्युपपन्नम्।ततोऽनुपातः।यदि
त्रिंशांशैर्द्वादशमासास्तदेष्टलग्नभागैःकिमिति।अत्रगुणहरौषड्भिरपवर्त्यलब्धंगुणेद्वौ२हरेपञ्च५अतोद्विनिघ्न
ारहृदित्याद्युपपन्नम्॥ ॥अथपिण्डनिसर्गजीवशर्मायुर्दायोपयोगिभूतान्दायांशान्साधयति॥ ॥ स्वोच्चे

ग्रे·म युचरोऽद्र·स्वल्पमधिको ग्राह्योऽल्पको नार्कभं १२ तद्भागाद्युचरो रिभे यदि गुणांशो नाविना वक्रगमनं च्या
६६ प्ताअस्तमिते विनाप्यनिसितो हानिद्वयेनाधिको कार्यो पिण्डनिसर्गजीवगादि ते चक्रार्द्धहानिर्भवेत् ॥
॥२१॥ स्वोच्चेनोनो ग्रहो यदि षड्भेभ्योऽधिकस्तदा स्वभागाः कार्याः। यदि षड्भाल्पस्तदा तद्भादशभ्यो विशोध्य भा
गाः कार्याः। दत्तानीताः स्वभावेन वक्रगतिं प्राप्तं ग्रहं भौमादिपञ्चकान्यतमं विहाय यद्यरिभे स्वाभाविकशत्रुराशौ
ग्रहः स्यात्तर्हि तेन तदीया भागा निजचतुर्थांशेन हीनाः कार्याः वक्री ग्रहः शत्रुराशावपि त्र्यंशं नापहरतीत्यर्थः। अत्र के
चित् द्विष्यणाकारा आरो वक्रः क्रूरवक्रावनेय इत्यभिधानाद्धित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागइति वराहोक्तौ व
क्रशब्देन भौमं व्याचक्षते तत्त्वरसादक्रगमित्यत्रापि भौमं व्याचक्षते तद्बहूनामसंमतत्वादुपेक्ष्यम्। ज्ञानराजसुतस्य
यीपि। आरो वक्रो वक्रचारो महीज इति भौमनामानि स्वेच्छया प्रकल्प्य वक्रचारग इति श्रीपत्युक्तौ वक्रचारगो भौम इ
ति व्याख्यातवान्। तदपि स्वच्छन्दं प्रवर्तमानस्यैकदेशिनो मतमुपेक्ष्यमेव। बृहज्जातकटीकायां हित्वा वक्रमित्यस्य
व्याख्यावसरे भट्टोत्पलेनाप्युक्तम्। वक्रं विपरीतगतिं हित्वा वर्जयित्वा यो ग्रहो रिपुगृहगतः शत्रुक्षेत्रगतो भवति तेन राम:
स्वादात्रिभागो हीयते। एतद्बहूनां मतम्। आचार्यस्य पुनरेष एव पक्षोऽभिमतः। अन्यथा हित्वा भौममित्याचक्षीत। ६६

अतएव ज्ञायते यथा वक्रगो ग्रह आयुर्दायं सबलत्वात्त्रिगुणं ददाति तथात्रापि नापहरतीति निश्चय इति। कथं पुन
र्वक्रिणं विहायेति पक्षस्य बहुसंमतत्वमिति चेत्। पश्य। श्रीधरः। वक्रचारं विनाऽस्यंशं शत्रुराशौ हरेद्ग्रह इति। श्रीपतिर
पि। त्र्यंशकं हरति शत्रुभे ग्रहः स्वायुषोऽत्र न तु वक्रचारगः॥ दामोदरोऽपि। विनावक्रगतिं हरेच्च। निजायुषस्त्र्यंशमरेर्गृहे ह
इति। होरामकरन्दे। त्र्यंशं हरत्यकुटिलारिपुराशिसंस्थाद् इति। बृहज्जातकेऽपि। हित्वा वक्रमित्यत्र वक्रमस्यास्तीति
वक्रः अर्श आदिम्यो च वक्रिणं हित्वेति व्याख्येयम्। प्रामाणिकैः श्रीधरादिभिराचार्यैर्गर्गपराशरबादरायणदेवला
दिपद्धतयस्तज्जातकानि च संपूर्णानि दृश्यान्यासन्नतस्तैर्यदुक्तं तत्सर्वं समूलमेव। यत्तु बृहज्जातकटीकायां न चा
वनिसुतस्त्र्यंशं शत्रुक्षेत्रगतस्तथेति गर्गवाक्यं यदपि च भूम्याः पुत्रं वर्जयित्वारिभस्था हरन्त्युः स्वात्स्वादायुषस्त्रि 69
भागमिति बादरायणवाक्यं तदुभयमप्यंशायुःप्रकरणेऽभिहितत्वादंशायुर्विषयमेवेति बोध्यम्। पराशरेण शत्रुक्षे
त्रगतस्त्र्यंशमिति वदता भौमं विहायेति नोक्तम्। तथा लघुजातकसारावल्यादावपि नोक्तमेवं मतभेदे पराशरमत
मेव बहुसंमतत्वादंशायुष्याहृतमाचार्यैरित्यपि ध्येयम्। अस्तु। इते प्राप्ते ग्रहे ते दायांशा द्विभक्ताः कार्याः। शनिशु
क्रावस्तंगतावप्यर्द्धं नापहरतः। अत्र त्र्यंशार्द्धहानिद्वये प्राप्तेऽधिकार्द्धहानिरेव कार्या न हानिद्वयम्। अनेन [illegible]

ग्रो·म· पिद्वितयंविधेयमित्यभ्युनातनोक्तंपरास्तम्।गर्गः।ध्रुवायहानिःकर्तव्याततोन्यासुबहुष्वपि॥प्राप्तास्वेकैवकर्तव्या
७० यास्वासांसुमहत्तरा।यवनः।खेचरोजायतेयोर्द्धंत्र्यंशयोरपहारकः॥आयुषःसहरेदर्द्धंत्र्यंशंशुक्रशनैश्चरौ।ननुध्रु
वायहानिःकर्तव्येत्यादिगर्गवाक्यस्यांशायुःप्रकरणेपठितत्वादनेनांशायुष्येवसकृद्धानिरुक्तानपिण्डायुषि।
किंचानिष्टार्थप्रतिपादकैर्वराहश्रीधरश्रीपत्यादिभिराचार्यैःपिण्डाद्यायुर्दायेषुसकृद्धानिर्नाभिहिता।तस्माद्द्वितो
र्हानिद्वयेप्राप्तेऽधिकैकाहानिःस्यादितियदुक्तंतदयुक्तम्।नचाचार्यैकत्वंतुबहुघ्नतायामेकंतुयद्गुरितदेवकार्यमित्य
स्याप्यस्यावसरेशत्रुक्षेत्रस्थोनीचस्थश्चयदाग्रहोभवत्यस्तंगतोवातदासकृदेवायहानिःकार्यानीचेतोऽर्द्धहृसतीत्य
त्राप्यनुवर्तनीयम्।इतिभट्टोत्पलोक्तेःसकृद्गुणननियमनैयम्येनसकृद्धानिरपिस्वीक्रियतामितिवाच्यम्।त
थासतिनीचस्थेग्रहेशत्रुक्षेत्र गते स्तमितेवासकृदर्द्धहानिरेवस्यान्नत्र्यंश हानिर्नापिद्वितीयार्द्धहानिरितिप्र
सज्येत।तत्रयथाभवद्भिर्दीयांशसाधनेनैवनीचस्थत्वनिबन्धनामर्द्धहानिंविधायपश्चाच्छत्रुराशिस्थत्र्यंशहानि
रस्तङ्ग-तेऽर्द्धहानिर्वाक्रियतेतद्वदिहापित्र्यंशार्द्धहानिर्द्वितयेप्राप्ते विनिगमनाविरहाद्धानिर्द्वितयमपिस्यादि रामः
तिसुन्दरोक्तएवपन्थानितान्तसुन्दरइतिप्रतिभाति॥अत्रवयंतुब्रूमः।खेचरोजायतइत्यादियवनमुनिवाक्येवि ७०

शिष्यत्र्यंश हान्यस्तंगतत्वनिबन्धनाद्धीहान्योर्विर्णयस्योक्तत्वात्तद्धानिद्वयेप्राप्तेऽधिकार्द्धहानिरेवस्यान्नहानिद्वय
म्।नीचस्थत्वनिबन्धनार्द्धहानौप्राप्तायांतथारिभस्थितत्ववशात्त्र्यंशलिप्त किरणत्वाह्वापरहानौचप्राप्तायांसत्र्
ह्वानिनिष्पादकत्वस्वाभावाद्धानिद्वयेनकिंचिद्वाधकम्।अतोहानिद्वयेत्राधिकैकेतिसर्वमवदातम्।खेचरोजा
यतद्वत्सापिवचनमंशायुर्विषयकमितिप्राञ्चः।तन्नचतुरस्त्रंप्रमाणाभावात्।केशवतःपरमप्राचीनेनभट्टोत्पले
ननेदंयवनवचनंदृष्टमतःकेशवदृष्टमिदंवचनंशककालप्राचीनयवनस्यनभवतीत्यप्याहुः।तदयुक्तम्।भट्टो
त्पलेनपराशरजातकंनदृष्टमस्माभिस्तुकिंचित्पराशरजातकंदृश्यतेतत्रभट्टोत्पलादृष्टत्वादिदंपराशरीयजात
कमेवनभवतीतिवक्तुमशक्यम्।तस्मात्प्रामाणिकैः श्रीकेशवसांवत्सरैर्दृष्टंयवनवचनंभवत्येव।अथविति। अ 70
थोदयानन्तर्ये। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोअथेत्यमरः॥चक्रार्द्धहानिर्भवेत्।पूर्वानीतस्वकीयचक्रार्द्ध
हानिगुणेनदायांशायुगुणानीयादित्यर्थः॥अत्रादितउपपत्तिः॥बृहज्जातके।मययवनमणित्थशक्तिपूर्वैर्दिवसकरा
दिषुवत्सराःप्रदिष्टाः॥नवतिथिविषयाश्विभूतरुद्रादशसहितादशभिःस्वतुङ्गभेषु॥१॥नीचेतोऽर्द्धह्रसातिहितत
श्चान्तरस्थेनुपातइति।उच्चेपठितमायुर्नीचेपठितमर्द्धमायुस्तस्मान्नीचादग्रतोवीगापिषड्राशिभिःपठितवर्षार्द्धस्यो

प्रौ॰म॰ पचयोऽभवतीतिनीचादग्निमाऽर्वाचीनाश्चराशयः पठितवर्षार्द्धगुणाः षड्भक्ताअथवापठितवर्षगुणाद्द्वादशभक्ताः
७१ फलंपठितवर्षार्द्धेयोज्यंपिण्डायुःस्यात्।तत्रस्वोच्चोनेषड्भाधिकेषड्भंसंशोध्यशेषंनीचादग्निमराश्यादि तत्पठितवर्ष
गुणंद्वादशभक्तंफलंपठितवर्षगुणितषड्भस्यद्वादशभागात्मकेपठितवर्षार्द्धेयोज्यमितिनीचादग्निमराश्यादेःप्रा
गेवषड्भाशियोगात्यथास्थितंस्वोच्चोनंलघुतरंषड्भाधिकंगृहीत्वायुःसाधनेनकोपिविशेषइतिबालोपिजानाति।अतः
स्वोच्चोनोलघुतरोषड्भात्मकमधिकोग्राह्यइत्युपपन्नम्।षड्भाल्पेतुस्वोच्चोनेतंषड्भाद्विशोध्यशेषंनीचादर्वाचीनराश्यादि
प्राग्वदिहापिप्रागेवषड्भयोगात्षड्भाल्पंद्वादशराशिभ्योविशोध्यग्राह्यमित्यपियुक्तम्।अस्यस्वोच्चोनषड्भाधिकग्र
हस्यराश्यादिपठितवर्षगुणंद्वादशभक्तंकार्यंतत्राचार्येणांशाएवकृताअतस्तद्भागाःपठितवर्षगुणाभगणांशैर्भा
ज्याइत्युपपन्नम्।अतएववक्ष्यते।दायांशाःस्वगुणैर्हताहिभगणांशा ३६० प्ताःसमादिपिण्डायुरिति।त्र्यंशार्द्धहानि
वासनाहोरागममूलेव।अंशायुषिवक्रगतिग्रहस्यसबलत्वेनायुषस्त्रिगुणितत्वादिहापिसबलत्वात्त्र्यंशहानि
रुचिता।अतोविनावक्रगमितिसाधु।सूर्येणयुद्धेनास्तमितयोरपिशनिशुक्रयोर्वैराभिनिवेशेननैवायुर्हानिरित्य एम॰
पिसुष्ठूक्तम्।पूर्वोक्तंचिन्तयेत्सर्वमितिसारावल्यामुक्तत्वाच्चक्रार्द्धहानिःकार्येत्यपिसुष्ठूक्तम्।अत्रारिभइतिसामा ७१

न्यतोनिर्देशात्स्वाभाविकशत्रुरेवग्राह्योनतात्कालिकशत्रुः।यतस्तथासतिकदाचिदधिशत्रुरपिसंभवति।तद्वशाव
पिप्राग्वद्धानिविशेषेणभाव्यं।हानिस्तुनाभिहितातोयद्व्याख्यातंस्वाभाविकशत्रुभइतितत्सर्वंसमीचीनमेव।नचा
धिशत्रुरपिशत्रुर्भवत्येवेतितद्गेपित्र्यंशहानिरितिवाच्यम्।अप्रयोजकत्वाद्बहूनामसंमतत्वाच्च॥ ॥अथलग्नेक्रू
रेहानिमाह॥ ॥ दायांशाद्युसदांपृथक्तनुलवादिघ्नाःखषट्त्र्युद्धृताआंशोनास्तनुगेखलेचयदिस
द्दृष्टेर्द्वयापापरे॥ निघ्नोग्रोदयभावजेनतनुगोग्रौचेद्वलिष्ठस्यतत्साम्येपुष्टफलेननेतितनुपेस्मिन्नं
शजेसौक्रिया॥२२॥ द्युसदांग्रहाणांदायांशाअनन्तरानीतायथाप्राप्तचक्रार्द्धहानिगुणितास्तेपृथक्स्थाप्याः।त
नोर्लग्नस्यराशीन्पहायांशादिनागुण्याःषष्ट्यधिकशतत्रयेणभाज्याःआप्तालब्धेनांशादिनापृथक्स्थाहीनाःकार्याः। 7
तनुगेलग्नगेखलेक्रूरग्रहेसति।अत्रक्रूराःसूर्यभौमशनयएव।यतआहबादरायणः।सूर्याङ्गारशनीनामेकस्मिं
ल्लग्नेभवतिहानिः।विधिनानेनसौम्येसितेदलंपातयेल्लब्धात्॥लब्धाद्दलंलब्धस्यार्द्धंपातयेदित्यर्थः।आयुःपि
ण्डभदितिशेषः।यदाशुभःक्रूरश्चद्वावेतौलग्नेभवतस्तदापिक्रूराक्रान्तत्वनिबन्धनाहानिःस्यादेव।यदाहपराशरः।
तिष्ठतःशुभपापौचेत्पापोदयविधिःस्मृतइति।एतदर्थलाभार्थमेवचशब्दोपादानमत्रेतिबोध्यम्।यदिलग्नस्यखलः

प्रे·म· सताच्छुभग्रहेणदृष्टस्तर्हिअर्द्धयाआघ्र्याऊना:कार्या:।अत्रशुभाश्चन्द्रबुधगुरुशुक्रा:। अथापरइति।अथशब्दोम
७२ तान्तरसूचनार्थ:।ग्रहाणांदायांशाउग्रोदयभावजेननिघ्न्याआघ्र्याऊना:कार्या:।उदयोलग्नंतदुदयभावात्तनु
भावात्तस्यमेतदुदयभावजमर्थात्फलम् ग्रस्योदयभावजंतेन लग्नवर्तिक्रूरस्यलग्नोत्पन्नारोहावरोहफ
लेनापिनिर्गुणनीयेत्यर्थ:।सौम्यदृष्टेतुलग्नगेक्रूरेउग्रोदयभावजेननिघ्न्याअर्द्धयाआघ्र्यो ना:कार्या:।ननुयदिद्वित्रा:
पापग्रहालग्नेस्युस्तदाकुत्रभावफलेनगुणनीयेत्यतआह। तनुगोग्नोवेद्बलिष्ठस्येति।षष्ठ्यंशमात्रबलेनाप्य
धिकबलशालिनइत्यर्थ: तनौलग्नेगकृतस्तौतथातौचतावुग्नौचतनुगौगौ।अत्रद्वित्वंत्रित्वोपलक्षकं।बलसा
म्येविनिगमकाभावाद्द्व्यादिफलप्राप्तंगुणनंनिषेधति।तत्साम्येपुष्टफलेनेत्यनेन।तत्साम्येपुष्टफलेनाधिका
रोहावरोहफलेनबलफलसाम्येतुद्व्यादिफलगुणनमर्थात्सिद्धम्।अपरेह्यालुगिरामकृत्सादय इतिवदन्ती
त्यध्याहार:।एवमेकदेशिमतमनूद्यदूषयति।नेतीति।इतिउक्तंयत्परमतंतन्नरमणीयंनेत्यर्थ:।लग्नगेक्रूरेल
ग्नेशेद्द्यहानि:कार्यानवेत्याकाङ्क्षायामाह॥तनुपेस्मिन्निति।अस्मिन्लग्नगेक्रूरेतनुपेलग्नेशेसतिअसौहानिरू राम:
पाक्रियाकार्या।अन्यंविशेषमाह॥नांशजेसौक्रियेति।स्पष्टम्।असौक्रियेतिकाकाक्षिगोलक न्यायेनोभयत्रसंब ७२

ब्यते।यद्वा।नेतितनुपेस्मिन्नित्यत्रअस्मिन्लग्नगेक्रूरेतनुपेसतिअसौहानिर्नकार्येत्यपरेवदन्ती।विस्तारस्त्वेय
म्।अत्रोपपत्तिः।बृहज्जातके।सार्द्धोदितोदितनवांशहतास्समस्ताद्भागोष्टयुक्तेयतसंख्यउपेतिनाशम्।क्रूरेविल
ग्नसहितेविधिनात्वनेनसौम्येक्षितेदलमतःप्रलयंप्रयाति।अर्द्धशब्दःखण्डवाचकस्ततोर्द्धेनखण्डेनोदितोर्द्धो
दितस्तेनसहवर्तमानाःसार्द्धोदिताःसावयवादित्यर्थः।सार्द्धोदिताउदिताश्चतेनवांशाश्चतेहंतारः।अत्रलग्नन
वांशेतित्यक्तोदितनवांशत्यागस्तुपादानंलग्नस्यराशीन्विहायशेषभागानांकलाःशतद्वयेनभाज्यालब्धंसावयवनवां
शादित्येतदर्थम्।उत्पलस्तु·लग्नराश्यादिकंलिप्ताःपिण्डीकृत्यशतद्वयेनभागमपहृत्यावाप्तंभचक्रस्यतावन्तो 72
नवांशाउदिताःयश्चार्द्धोदितनवांशःसतत्रोदितनवांशसमूहेयोज्यः।एवंकृतेसार्द्धोदितोदितनवांशसमूहोभ
वतीतिव्याचख्यौ।तत्रैकग्रन्थेयम्।यस्माद्बादरायणः।लग्नांशलिप्तिकाभिर्हतास्तुभंजेच्चक्रलिप्ताभिः।कल्याणशर्मा।ल
ग्नांशलिप्तिकाहत्वेत्यादि।श्रीधरः।लिप्तीकृतैर्लग्नभागैर्दायान्हन्यादिति।गुणाकरोपि।लग्नस्यखलखेचरैस्तुल
वाभ्योमौकसामिति।दामोदरः।क्रूरायहानिश्चततोत्रराशीन्विहायलग्नस्यलवादिकेनेति।आदिशर्मा·एषवक्ष्य
खेटायुस्तनुलवहतमिति।विश्वनाथोपि।तनुगखलेखेटदायाःपृथक्तन्वंशादिघ्नाइत्यादि।अत्रस[illegible]शपर्यायप

दपर्यन्तधावनस्य लग्नराशीन्विहायांशा ग्राह्या इत्यत्रैव तात्पर्यम्। अन्यथा लग्नलिप्तिकाभिर्हेलेत्याद्युक्तं स्यात्। अत
एवक्ते नोक्तमन्यैरेवंश्च सर्व इत्यादिनेतदपि समूलमित्यन्तेन। यत्तु। कुम्भलग्नस्याद्यांशक उदये आदित्यचन्द्रबु
क्राः परमोच्चे बुधजीवशनैश्चराः परमनीचे भौमश्च कुम्भेष्टाविंशतिभाग इत्यस्मिन्नुदाहरणे लग्नस्य भुक्तनवांशभू
न्यत्वेन पापग्रहभौमसंबन्धनिबन्धनहान्यभावेपि यच्चक्रपाहानिं ग्रहाणामुदीये शुक्रत्वा सार्द्धपञ्चदशवर्षतुल्यम
शाभ्यूर्ध्वं विंशतेरधस्तादायुरानीय वविंशतेरधस्तादायुर्न स्यादिति वराहोक्तमयुक्तमित्युक्तं तदयुक्तमिति बोध्य
म्। चक्रस्योदितनवांशा ग्राह्या इत्यस्मिन्पक्षेपि लग्नस्य दशराशय इति नवतिनवांशभुक्तास्तस्मादेकनवतिनवां
शाभुक्ता इत्युक्तं तदप्यसंगतम्। लग्नगतनवमांशस्य भुक्तत्वात्। तस्मान्नायुर्विंशतेः स्यादधस्तादिति युक्तमुक्तं वरा
हमिहिराचार्यैः। यद्वा। विंशतेरधस्तादायुरुदाहरणान्तरे भवतु नास्माकमत्राग्रहस्तथापि भट्टोत्पलप्रदर्शितविंशत्य
ल्पायुर्दायोदाहरणमसदेवेति ब्रूमः। किंच। वक्रितः पुनः शत्रुक्षेत्रगतोपि नापहरति। एतद्बहूनां मतमिति पूर्वमुक्तं प
श्चादङ्गारकस्य शत्रुक्षेत्रगतस्यापि न पततीत्यभिहितमतः पूर्वापरग्रन्थविरोधोपि दूषणम्। यदपि चोक्तम्। परमोच्च
गतानां परमनीचगतानां च शत्रुक्षेत्रस्थत्वात्र्यंशोस्तंगतानामर्द्धं च न पात्यते। यतोनिमिषपरमांशके विलग्न इत्यत्र वृ

षस्थस्य चन्द्रस्य शत्रुक्षेत्रस्थत्वेन त्र्यंशहानौ कृतायां परमायुर्न प्राप्नोतीति। तदपि मन्दम्। यवनमतेन शुक्रस्य चन्द्र
शत्रुत्वेपि सत्यादिमतेन स्वाभाविक तत्कालमित्रामित्र प्रकाराभ्यां समभित्रत्वोपलम्भेन अंशहानेर प्राप्तत्वेन तन्निषे
धस्यान्याय्यत्वात्॥ किंच तत्कालज शत्रुगेहे त्र्यंशहानिवादिमते शुक्रस्य यवनप्रकारेण चन्द्रस्वाभाविक शत्रुत्वेन तत्का
लमित्रत्वेन च समत्वात् त्र्यंशहानिकथनमयुक्तम्। ननु सत्ययवनमतयोर्विरोधे किं ज्यायः। उच्यते। बहुसंमतत्वा
त्सत्याचार्यमतमेव प्रमाणमिति। एवमादिभट्टोत्पलेनासङ्गतमुक्तमित्यास्तां तावत्॥ ॥ प्रकृतमनुसरामः॥ ॥ ल
ग्नप्रान्ते ग्रहायुर्द्वादशांशतुल्या परमाहानिर्लग्नादौ तु हान्यभावस्तत्र नवांशानामपि परमत्वाभावावतो नवांशे
भ्यः साधनमुचितं हान्याः। तत्र नवांशानयनार्थमनुपातः। यदि कलानां द्विशत्या २०० एकोनवमांशस्तदेष्टविरा
शिलग्नकलाभिः किमिति। अन्योप्यनुपातः। यदि नवभिर्नवमांशे रायुर्द्वादशांश तुल्योपचयस्तदेष्टनवांशैः कि 73
मिति। अनन्तरोदीरितत्रैराशिके द्वादशनवघातं हरं १०८ कृत्वाष्टयुक्तशतसंख्यो भागो हीयत इति सम्यगुक्तम
त्र भवद्भिर्वराहमिहिराचार्यैः। एनमपि हरं १०८ द्विशत्या संगुण्य निष्पन्नचक्रकलातुल्यहरेण २१६०० युर्दी
पं लग्नांशकलाहतं भजेदिति बादरायणकल्याणवर्मश्रीपत्यादिभिरपि युक्तमुक्तम्। श्रीकेशवसांवत्सरै स्तु

श्री.म. नूनमेकैकलास्थानेंशागृहीतास्तथाचक्रकलास्थानेचक्रांशागृहीताअतोयदुक्तंतत्सम्यगेव। श्रीपत्यादिभि
७४ र्दग्धांशजनितवर्षाणामपचयएषह्रासोभिहितोत्रतुतद्द्वेतोरितिन्यायेनदग्धांशानामेवह्रासोविहितइतियुक्तमु
त्पश्यामः। अयंह्रासोदग्धांशेभ्योविशेष्योतश्च स्तोनाकृतिसाधु। सदृष्टेदृष्टयेत्यत्रागमएवप्रमाणम्। अथपरमतवा
सनोच्यते॥ उग्रग्रहस्यलग्नभावफलेसंपूर्णेप्रोक्तहानितुल्याहानिर्भावफलाभावेहान्यभावः। अन्तरात्त्रैराशि
केनहानिसाधनंन्याय्यंतत्रनेष्टंत्रैराशिकम्। रूपमितेनसंपूर्णेनक्रूरलग्नभावफलेनप्रोक्ताहानिर्लभ्यतेतदेष्ट
नकिमित्युग्रोदयभाव ज्ञेननिष्पाद्येत्युपपन्नम्। अतएवोक्तंरत्नावल्याम्। संस्कारएवमुदितोग्रहजीवितांशसं
शोधनेपरमभावफलानुसारम्॥ उक्तोल्पकेसतिचभावफलेनुपाताद्ह्रासोबुधैर्विधिरसाविहयुक्तियुक्तः॥ १॥ ने
त्युक्तंमन्यामहेगर्गपराशरबादरायणाद्यनुक्तत्वाद्वराहाद्याचार्यैरनुक्तत्वाच्च। किंचयद्येवंयुक्तिबलात्स्वीक्रियेत
ततदालग्नगक्रूरंप्रतिशुभस्यसंपूर्णादृष्टौभावफलगुणितलब्धेर्दलंशोध्यंन्यूनदृष्टौतद्दृष्टिगुणितंभावफलघ्नल
ब्धेर्दलंशोध्यंद्वयोःशुभयोर्दृष्टौबलवद्ग्रहदृग्गुणितंतद्दलंशोध्यंबलसाम्येधिकदृष्टिगुणंतद्दलंहेयमित्याद्यतिप्र रामः
सङ्गोभूयानापद्येत। तस्माद्यत्किंचिदिति॥ ॥ अथयोगेभावःस्वामिदृष्टोयुतोवासौम्यैर्वास्यात्तस्यतस्यास्तिवृद्धिरि ७४

तिस्वामियोगस्यशुभत्वाभिधायकत्वात्सनहानिकरोभवतीतिलग्नगेक्रूरेलग्नेशेप्यसौहानिःकार्येतियत्व्या
ख्यातंतन्नविचारपदवीमारोढुमर्हतीति।अत्राहुः॥योयोभावइतिवाक्येभिन्नविषयकेसत्यपियदिहानिर्नस्वी
क्रियतेतदासिंहराशिपत्तावपिरवौसिंहस्थेपराह्णायुक्तंनिशान्धत्वंदत्तजलाञ्जलिस्यात्।तत्रयथासिंहसंस्थे
निशान्धइतिवाक्येननिशान्धत्वंदुष्परिहरंतद्वदिहापिलग्नगेक्रूरेलग्नपतावपिवाक्यादियंहानिर्दुष्परिहरैव।
किंचैवंयुक्तिसंचारेक्रूरेसौम्येचग्रहेलग्नस्थेसाम्यादेषाहानिर्नस्यात्।अपिचलग्नस्थेक्रूरेशुभदृष्टेपापदृष्टेचशु
भाशुभत्वसाम्यात्संपूर्णैवहानिःस्यान्नतदर्धहानिरित्यादिकोभूयानतिप्रसङ्गःप्रसज्येतेति॥वस्तुतस्तुलग्नेक्रू 74
रेष्वप्येषांलग्नायुष्येवहानिरुक्तास्मात्संततसिंहस्थेपीयोयोभावइतिवाक्यबलादान्ध्यभावोपिस्यात्।बृहज्जात
केसार्धोदितोदितनवांशहतेत्यादिवाक्यस्यग्रहायुर्हानिप्रकरणेपठितत्वात्सारावल्यांविहगायुषेतिस्पष्टमुक्त
त्वाच्छ्रीधरेणापिलग्नवर्षादिकंशेषग्रहाणांतन्निजायुषोयुक्तत्वाच्चग्रहायुष्येवास्यह्रासोनलग्नायुषीतिलग्न
गेक्रूरेलग्नपतावपिग्रहायुर्हानिकरणेनकिंचिद्बाधकमितिस्वामियोगस्यशुभत्ववादिभिःपरैरप्यवश्यमास्थेय
म्।पश्यतहोरायामपिहानिःकार्येत्येवोक्तमतोयदुक्तमाचार्येणतन्नुपेक्ष्यमिन्नसौक्रियेतितदार्षशास्त्रसंमतंयुक्ति

मुक्तोऽपि। अतएवसुन्दरसिंहेनाप्येवमेवोक्तम्। क्रूरेतरेणापि मतेवहानिरितियत्त्वाचार्यैरिष्टम्। अन्यमस्यादृशार्थ्याख्यानेन त
त्रैवकदोषात्पतितमित्यादिगातिस्थिन्त्या। क्रूरोदयेऽप्युपचयः सनात्रांशायुषीत्युक्तत्वात्तत्राजेसौक्तिमेतिसर्वमवदा
तम्। अत्रश्रीपतिपद्धतिटीकायामंशायुर्दायस्तुलग्नबलाधिकत्वादेवोत्पद्यतेतत्र क्रूरयोगाद्धानिर्युक्तैवेतिवास
नांवदता सूर्यणांशायुष्येषाम्हानिरिति स्वीकृतंतदनेनएरास्तम्। यदपिचवासनानभिज्ञतयाचक्रकलाभिरायुर्दाये
लभ्यतेतल्लग्नकलाभिः किमित्यभिधापितदप्यसदेवेतिबोध्यम्॥ एवंदायांशानभिधायाधुनापिण्डनिसर्गजीवशर्मायुर्दायानयनमाह॥ ॥ गोब्धास्तत्वतिथिप्रभाकरतिथिस्वर्गानखाः पैण्डजेनैसर्गैनखभूद्विगोधृति
नखाः पञ्चाप्यदर्कोद्भवाः। दायांशाः स्वगुणैर्हताद्विभगणांशाप्तास्समाद्यायुषीस्वर्गीत्राश्वसमादिजेवमि
शहत्वांशोर्घटीसम्वितम्॥ २३॥ अर्कादितिलग्नस्योपेपञ्चमी। अर्कमारभ्येत्यर्थः॥ अत्रसमादिपूर्वोक्तरीत्याग्रा
ह्यम्। शेषंस्पष्टम्। स्वर्गेभ्यआदृति। सर्वेषांग्रहाणांदायांशाएकविंशत्याभक्तालब्धवर्षादिजीवशर्माचार्यमतेआयुःस्या
त्॥ तद्वत्पादिदायांशेभ्योऽष्टभक्तेभ्योलब्धघटीमुखेनयुक्तंकार्यमित्यर्थः। पिण्डायुर्वर्षादिसाधनोपपत्तिः प्रागुक्ता। नै
सर्गिकेपिदायांशवर्षाद्यानयनयुक्तिः सैव। एवमेवप्रकर्तव्येजीवशर्मोक्तचन्द्रजइतिसारावल्यामुक्तेश्चकाऽईहा

न्यादिकमत्रापिकार्येमित्युपपन्नम्।अथजैवेयुक्तिः।जीवशर्मा।सप्तदृशैकोद्वियमावसवोवेदाग्नयोग्रहेन्द्राणा
मब्दाण्युच्चस्थानानि।नीचस्थानमतोर्द्धंच।मध्येत्वनुपातात्स्यादानयनंशेषमत्रयत्किंचित्।पिण्डायुषएवका
र्यंतत्सर्वंगणितनन्त्रज्ञैरिति॥अतस्तएवहानिसंस्कृतादायांशाअत्रापिग्राह्याइत्युपपन्नम्।उच्चस्थेद्युचरेदा
यांशाभगणांशमिताःसन्त्यतःपरमंपरमायुरगांशतुल्यंपरमायुस्तुसपञ्चदिनंविंशत्यधिकवर्षशतम्।
१२०।०।५।०।० अत्रपञ्चदिनानित्यक्त्वाशेषमायुः १२० परमायुष्टेनतावद्गतम्।अतोनुपातः॥यदिभगणांशमि
तैर्दायांशैः ३६० परमायुःसप्तमांश १२० तुल्यमायुस्तदेष्टैः किमिति।अत्रहरघातोहरः २५२० गुणाः १२० एतौ
गुणेनापवर्त्यप्राप्तएकविंशतिर्हरे २१ अतोदायांशाः स्वर्गाप्तावर्षादिजैवमायुरित्युपपन्नम्।अथपञ्चदिनेभ्य 75
आयुःसाधनार्थमन्योनुपातः।यदिभगणांशैः ३६० पञ्चसप्तमांशा ५ आयुस्तदेष्टैः किंलब्धंदिनादिभवति।त
त्रघटिकादेफलानयनार्थमन्योपिषष्टिर्गुणः ६०॥एवमत्रगुणघातोगुणः ३०० हरघातोहरः २५२० गुणहरौगुणे
नापवर्त्यहरे किंचिदधिकाअष्टौलभ्यन्ते तत्रस्वल्पान्तरत्वादष्टैवोपात्तास्तेनेभहृदित्याद्युपपन्नम्।अतएवग्र
हर्क्षेष्वल्यापवर्त्यलवतःशरघ्नाद्धिवेदभागाप्तघटीभिराद्यमितिमिश्रैरपिसूक्तम्।अथप्रसङ्गात्श्रीपतिकल्प

-म. ऽऽरवमस्मोच्यते। तत्र परमायुर्वर्षाणि १२० एषु पञ्च दिनान्येक वर्षद्विस प्रत्यंशशालिकानि $\frac{1}{72}$ समच्छेदविधिना यो
योज्य जातं परमायुः। ८६५१ अस्य सप्तमांशोयम्। ८६५१/७४ अथ भगणांशमिते दीर्घांशेरेतावदायु ८६५१/७४ स्तदेष्टैः
किमिति। अत्र दिनादिफलानयनाय पुनर्भगणांशगुणे केस्तुल्यगुणहारयोरपगमे ग्रहः सोच्चहीनैः सचेत्षड्भही
नो भवचक्रादि शोध्य भागीकृतः सन्॥ कुवेदर्तुनं गै है॥ वेदखाक्षैर्विभक्तो दिनाद्यं भवत्येव मायुरिति प्रकारो नि
ष्पद्यते। एकदेशिनस्तूच्चस्थ ग्रहे शून्यमितमुच्च ग्रहान्तरं स्यात्तदानीमेव परमायुर्गांशमितमायुर्भवति यदोच्च
ग्रहान्तरं शून्याधिकं स्यात्तदानुपातः। यदि शून्यमितेरन्तरांशैः परमायुर्भागांशो लभ्यते तदेष्टग्रहोच्चान्तरभागैः कि
मिति त्रैराशिकेन वासनां व्यावर्णयन्ति॥ ॥ श्रीमच्छ्रीगुरुचरणान्प्रणम्य राशेः खहरत्वेन फलानन्त्यादेत द
युक्तमेवेति यद्यपि वक्रामस्तदिहं सेविदां कुर्वन्तु नर शून्यसमहरघाते स एव भवन्तीति न खहरत्वमिति वाच्यम्।
शून्यगुणः खमिति पाटीगणितोक्तेः। तस्मादपठितपाटीगणितेन सूर्येण यदुक्तं तत्पाटीगणितानभिज्ञतया यष्टिसाधनं भा
स्करोक्तं विषुवद्दिवसेव्यभिचरतीति सुन्दरसिद्धान्ते ज्ञानराजोक्तिवत्त्रत्याख्येयम्। यदप्यायुर्भतान्मितरन्तरांशेर्वी राम:
र्यादिपरमायुर्गांशो लभ्यते तदेष्टैः किमिति त्रैराशिकेण फलं दिनाद्यं भवतीत्युक्तं तदपि फलमन्यजातिमध्ये तदितिपा ७६

टीगणितात्संनादेवेतिबोध्यम्। वस्तुतस्तुदिनादिकमेवफलंमायातिपरंतत्रहेतुरपरइतिबहूक्तमित्युपरम्यते। अथे
तेषुसिद्धेषुपिण्डाद्यायुष्षुलग्नायुरानयनमाह॥ ॥ स्पाल्लिप्ताः खनखोद्धताविभतनोर्वर्षादिपैण्डात्त्रिके
लग्नायुः॥ ॥ विभतभाः विराशिलग्नस्यांशेषमुत्तानम्। अत्रोपपत्तिः। बृहज्जातके। होरात्वंशप्रतिममायुःप्रय
च्छतीतिपिण्डायुःप्रकरणेभिहितत्वाल्लग्नभुक्तनवांशतुल्यमायुःसिद्धम्। ततोनुपातः। आभिः कलाभिः २०० चेदेको
नवांशस्तदेष्टविराशिलग्नलिप्ताभिः कतीतिनवांशाभवेयुः॥ एकेननवांशेनैकंवर्षं तदेभिर्नवांशैः कियन्तीतिनवां
शसमान्येवायुर्वर्षाणीत्युपपन्नम्। पिण्डायुर्वदेवांशायुर्जीवशर्मोक्तेकर्तव्यइत्युक्तेस्तत्राप्येतदेवायुरितियुक्तम्। न
न्वंशायुषिपिण्डायुषिचांशप्रतिमंलग्नायुरितिसर्वैर्जातककृद्भिरुक्तमस्ति। आचार्योक्तप्रकारेणत्वंशायुषिलग्ना 76
युः परमंद्वादशवर्षतुल्यंपिण्डायुषिपरमंनववर्षतुल्यमागच्छतितत्रकोहेतुरितिचेत्। शृणतर्हि। पिण्डायुषिहोरा
त्वंशप्रतिममायुर्ददातीत्युक्तंतत्रनवैवनवांशादितिपरमंलग्नायुर्नवैववर्षाणि। अंशायुर्दायेतुकिलत्रभांशप्रति
मंददातीत्यभिहितंतत्रभपदोपादानस्येदंतात्पर्यंलग्नंयस्यांशेनवमांशेवर्ततेसराशिर्मेषादेर्यावत्संख्योभवति
तावन्त्येवाब्दादिति। अतोंशायुषिपरमंलग्नायुर्द्वादशवर्षाणीतिसिद्धम्। अंशायुषिवीर्यान्वितराशिसमंवायुःप्रय

वांस्तदा राशितुल्यमिति परैः कल्याणवर्मगुणाकरादिभिरुक्तं राशिनवांशनाथयोर्बलिनोः सतो राशितुल्याब्दयु
क्तं लग्नांशायुः कार्यमित्यर्थत एव सिद्धम्॥ अन्यदप्याह॥ ॥ तेनाद्यमन्ये यदंशायुर्वेत्तु॥ ॥ अंशैः समम्मा
युरंशायुषा तुल्यमंशायुर्वत् तेन तुल्यमित्यादिना वतिप्रत्ययः। यल्लग्नायुःस्याल्लिप्ताः खनखोद्धृता इत्यादिप्र
कारानीतं तत्तेन राशिनाथे बलोपेते राशितुल्यं पुनः स्फुटं कार्यमंशेशबलिन्यंशसमेन युक्तं कार्यं द्विगुणं कार्य
मिति यावत्॥ एवमन्येमतं सिद्धान्तमाह॥ । अथ चांशतुल्यमखिलोक्तं ग्राह्यमेवादिमम्॥ २४॥ अ
त्रैवकारो भिन्नक्रमस्तेनाखिलोक्तमंशतुल्यमादिममेव ग्राह्यमित्यर्थः॥ अथैषां चतुर्णामायुषामवस्थामाह॥ ॥ अंशा
युष्यतनाविनेधिकबलेपिण्डनिसर्गविधोस्यन्त्वे तुल्यबलं द्वयोर्युतिदलं तज्जायुषोश्चेत्त्रयः। त्र्यायूंषि त्रि 77
बलैर्निहत्य प्रतिकर्षयेदहद्वात्रिजायुर्युत्या त्रि जवोषजेवमुदितं चेद्धीनवीर्यास्त्रयः॥ २५॥ अत्राधिक
बलद्वयस्य त्रलिङ्गविपरिणामेनाधिकबलानामिति तनुविशेषणं बोद्धव्यम्। स्त्रियां मूर्तिस्तनुस्तनूरित्यभिधानेन त
नुशब्दस्य स्त्रीलिङ्गत्वात्। षड्रूपाधिकं षड्बलैक्यं यस्य सोऽधिकबलस्तत्र लग्नेऽधिकबलेंशायुः स ध्वंसूर्येऽधिकबले पिण्डा
युश्चन्द्रे नैसर्गिकं साध्यम्। विलग्नार्कचन्द्रास्त्रयोपि हीनवीर्यास्त्रिरूपाल्पबलास्तदा जीवशर्मोक्तदायः साध्यः। यस्य ते

प्रो॰म॰ रूपाधिकं षड्रूपाल्पबलः समध्यबलस्तत्र लग्नेमध्यबलेंशायुः सूर्ये पैण्डं चन्द्रे निसर्गजं साध्यम्॥ अथ मिश्रायुः संभव
७४ तोन पृथक्कृतत्साधनमाह। स्याद्वेदिति। अस्यायं तात्पर्यार्थः। यदि लग्नार्कचन्द्रास्त्रयोपि षड्रूपाधिकबलाः यद्वा त्रयो
पि मध्यबलास्तदा चत्वारः। बलेन दिनादिकमंशायुः संगुण्य सूर्यबलेन पिण्डायुः संगुण्य चन्द्रबलेन निसर्गायुः संगुण्य
त्रयाणां योगं लग्नार्कचन्द्रबलानां योगेन भजेल्लब्धं वर्षादिस्फुटं मिश्रायुर्भवतीत्ययं मुख्यः। अथवांशपैण्डनिसर्गायुर्योगस्य
तृतीयांशोमिश्रायुः स्यात्। अथ यदि द्वौ षड्रूपाधिकबलौ यद्वा त्रयाणामपि षड्रूपाधिकबलाभावे द्वौ मध्यबलौ तदा त
त्तदायुस्तत्तद्बलेन संगुण्यानयोर्योगं द्वयोर्द्वयोर्बलयोगेन भजेल्लब्धं स्पष्टं मिश्रायुः। मुख्यः पक्षोयम्। यद्वा तत्तदा
युषोर्योगस्यार्द्धं मिश्रायुः स्यात्। अत्रोपपत्तिः। सा एवं आम्। अंशोद्भवं विलग्नात्पैण्डं भानोर्निसर्गजं चन्द्रात्॥ एते
षां योबलवानेकतमं तस्य चिन्तयेदायुः॥ लग्नार्कचन्द्रास्त्रयोपि बलरिक्ततां यदा यान्ति। परमायुषः खरांशं
दद्यतिखगाजीवशर्मोक्तम्। अतो यदुक्तं तद्युक्तम्। अथ यदि द्वौ रूपाधिकबलौ मध्यबलौ वा तदा तत्तद्बलवशादायु
र्द्वयप्राप्तौ सत्यां विनिगमकाभावादेकतरायुरवलम्बोनकर्तुमुचितमित्यायुर्द्वयोर्योगार्द्धं ग्राह्यमिति पर्यवसितम्। रामः
परं तत्तद्बलवशात्प्राप्तिरिति द्वयोर्बलयोरेकाकारतायां तत्तदायुषोर्द्वयम युक्तं विलक्षणयोर्द्वयोर्बलयोरेकाकारतायां ७८

गार्द्धे विश्रान्ता। तत्रानुपातः। यदि बलद्वययोगार्द्धेनैतदायुषोऽर्द्धं लभ्यते तदायुःप्रापकेतद्बलेन किमित्यत्र हरसंछेदां-
शयोः परिवर्तनाद्द्विगुणो द्वयं हरोऽस्त्येवेति तुल्यत्वाद्द्वयस्य नाशे कृते एतदायुष एतद्बलं गुणो बलद्वययोगो भाजकः। ए-
वमेव द्वितीयायुर्दायेऽपि तद्बलं गुणो बलद्वययोगो भाजकः। एवं भाजकयोरैक्ये तत्तदायुस्तत्तद्बलेन संगुण्य योगं बलैक्ये-
न भजेल्लब्धं मिश्रायुर्भवतीत्युपपन्नम्। एवं त्रिष्वपि न्यूनाधिकबलेषु मध्यबलेषु वोपपत्तिर्वेद्या। अत्र यत्तुल्यबलादुत्य-
त्रिविषष्ट्यंशपर्यन्तं बलसमत्वं विवक्षितमिति केनचिदुक्तं तदसङ्गतम्। यतस्तादृशतुल्यबलत्वे प्रकारद्वयसा-
धितमिश्रायुषस्तुल्यत्वोपलम्भेन लाघवात्त्रिजायुर्युत्याखिलवदित्येवोक्तं स्यात्। तस्माद्धीनत्वं मध्यत्वमुत्तमत्वमा-
दायतुल्याधिकत्वे स्वसमीचीनमिति मन्तव्यम्। किंच पराशरेण त्रिजायुर्योगस्य द्वित्र्यंशं विहायैव मिश्रायुरुक्तम्।
आयुश्च परमं ह्यस्त्वा स्वेन स्वेन बलेन च। विभजेद्बलयोगेन ग्रहाणां दायमेव सदिति। तस्माद्द्विषष्ट्यंशपर्यन्तं बलसाम्यं
ग्राह्यमिति पक्षो न युक्तः। यत्तु द्व्यायुर्योगार्द्धं त्र्यायुस्तत्र्यंशो वा कार्यस्तच्छ्रीधराचार्यसंमतमिश्रायुरिति श्रीपतिनो-
क्तं तदशुद्धम्। यत आह श्रीधराचार्यः। अंशायुर्लग्नवीर्येण पैण्डभानोर्निसर्गजम्। हन्याच्चान्द्रेण सर्वाणि त्र्यायुज्यैक्यत्रभा-
जितम्। लग्नार्कचन्द्रवीर्याणां संयोगेन स्फुटं फलम्। वर्षादिकं भवेदायुः श्रीधराचार्यसंमतमिति॥ अथ हीनबलचक्रं

श्री म. दिलसूर्णतेथांशायुरेवबहुसंमतत्वाद्गृह्यं तथेदं न मयः केषांघटतइतिवदति॥ ॥ अल्पेदिनबलोबलेषड्डापि
९६ केवीर्योग्रहश्चोदस्ये भिन्नं स्वस्वमते स्मृतायुरिति यत्राज्ञैर्व्यवस्थापितम्। अंशायुर्बहुसंमतं भवति ग्रसस्यं
च सत्योदितं स्याद्धर्मोष्टसुशीलपथ्यसुभुजां नस्यादिदं पापिनाम्॥ २६॥ अधिके षडल्पे बले ग्रहोलग्नं वा मध्य
बलमित्यर्थात् सिद्धम्। शेषं विरोहितार्थं व्याख्यातं च स्वकृतटीकायामाचार्यैः। अत्रोपपत्तिः। षडेव बलानि सन्तीति प्रत्ये
कं यदि संपूर्णात्मकं रूपं बलं गण्यते तदा षड्रूपाणि भवन्तीति षड्रूपबलवान् प्रत्येकं संपूर्णबलोपपन्नो बली युक्त एव। ष
ड्रूपादधः संनिहितं मध्यबलं षड्रूपाणामधः संनिध्यं त्र्यात्मकत्रिरूपपर्यन्तम्। मध्यबलाधः संनिहितं त्रिरूपाल्पही
नबलमिति युक्तमेव॥ अथ शिष्यभ्रान्तिनिरासार्थमाह॥ ॥ हानिर्यास्तमितेरिभेष्वनुमतांशोत्थे स्वबुद्ध्यान त
द्ग्रस्यावेष्टिक आश्रमे स्तिनिखिलैः पिण्डादिभूक्प्रा ततः॥ आयुः सौरमिदं यतोब्दगणना सौरात्ततः सूरिभिः
प्रोक्तं सत्यमसत्यदल्पकथितं नाक्षत्रकं सावनम्॥ २७॥ केनचिदाचार्येण अस्तमितेरिभेया हानिरर्द्धकृता सा तु
स्यांशायोत्थे आयुर्दाये अल्पा सो बुद्धिकृतया हेतुभूतया अनुमता स्वीकृता न तदिति तन्मतं न समीचीनमित्यर्थः। अल्प ग.भ.
बुद्धेति करणे तृतीया। शेषमाकरे स्पष्टम्। एवं मनुष्यायुर्विधिव्यवस्थाप्याधुनातत्परमायुरन्यप्राणिनां परमायुः पुरः ७८

सर्वमायुर्दायानयनं चाह॥ ॥ पञ्चाहं मखभूसमा १२०।०।५ नृकरिणां व्याघ्राद्यजादेर्नृपा १६ गोकालो
ष्ट्रजिना २४ स्तथोष्ट्रखरयोस्तत्त्वानि २५ सूर्याः १२ शुनाम्। अम्भायुः परमं रदा ३२ नृवदिद्वानीयायुरेवं
परायुर्निघ्नं नृपरायुषा च विहृतं तेषां स्फुटायुर्भवेत्॥ २८॥ एतद्व्याकरे स्फुटम्। उपपत्तिस्तु यदि मनुष्यप
रायु १२०।०।५ षा प्रमाणीभूतेनेदमानीतं मनुष्यवत्तुरष्ट्रादीनामवाप्यते तदा स्वस्वपरायुषा किमित्यनुपातेन सु
गमा॥ ॥ सवासनायामस्मत्कारिवृत्तिर्दिवाकरेणामलकेशवोक्तेः॥ सलग्नखेटायुष एष तन्त्रदायाधिकारः परिपूर्ति
मागात्॥ ५॥ इति दिवाकरप्रणीतायां केशवपद्धतिटीकायां प्रौढमनोरमाभिधायामायुर्दायाध्यायः पञ्चमः॥ ॥ अ
थ दशाध्याय आरभ्यते। तत्रादौ दशास्वरूपं तच्छुभाशुभफलं चाह॥ ॥ यस्यायुर्यदसौ दशास्य च शुभेष्टा स्व ७९
स्वभांशे तथारोहिणी च परिच्युतस्य यदि सा कष्टारिनीचांशभे॥ त्यक्तोच्चेत्त्ववरोहिणी भवति सा मध्या
च्चमित्रस्वभांशे सदृष्टयुतस्फुरत्करबलिष्ठेष्टाधिके स्याच्छुभा॥ २९॥ यस्य ग्रहस्य यदायुरसौ अस्य दशा
स्यात्॥ अत्रादसशब्दस्य विधीयमानलिङ्गताशेत्यर्थः। यत्ता प्रकृतिर्जलस्येत्यादौ प्रसिद्धा। दैवयुगसहस्राणि द्वे आह्वः क
ल्पो द्युतौ नृणामित्यस्य व्याख्यावसरे लिखितं च श्रीधरस्वामिना। सर्वनाम्नां विधीयमानानुपमानलिङ्गग्रहणे कामं चार-

प्रे·म·
८०

टी॥ दृष्टोच्चस्वभांशे वर्तमानस्य ग्रहस्य दशा शुभा स्यात्। भं चांशश्च भांशम्। दृष्टश्च उच्चं च स्वश्च तेषां भांशं तस्मिन् नम्पि त्रस्ये
च्चस्य वा स्वस्य वा राशौ नवांशे वा तिष्ठतो ग्रहस्य दशा शुभा स्यादित्यर्थः। नीचपरिच्युतस्य दशारोहा स्यात्॥ यदि नीचपरिच्यु
तो ग्रहः अरेः शत्रोर्भीचस्य वा अंशके नवमांशे स्यात्तदारोहिणी दशा शुभापि कष्टा स्यात्। मिश्रफलदा भवतीत्यर्थः। त्यक्त
मुच्चं येन स तथा तादृशे ग्रहे दशावरोहिणी स्यात्। इयमशुभफलप्रदा। उच्चमित्रस्वराशीनां नवांशे यदि त्यक्तोच्चो ग्रहः स्या
त्तदावरोहिणी दशापि मध्या स्यात्। सदृष्टयुतस्फुरत्करस्य बलिष्ठेष्टाधिके ग्रहे सति दशा शुभा स्यात्। सद्भिः शुभग्रहैर्दृष्टयुतः
सदृष्टयुतः। स्फुरन्तः करा यस्य स तथा। बलिष्ठः षड्रूपाधिकबलवान्। इष्टेनाधिक इष्टाधिकः अत्र कर्मधारयः समासः। तदे
तदुक्तं बृहज्जातके। भ्रष्टस्य तुङ्गादवरोहसंज्ञा मध्या भवेत्सा सुहृदुच्चभांशे। आरोहिणी निम्नपरिच्युतस्य नीचारिभागेष्वध
मा भवेत्सा। लग्नदशायाः फलं तत्रैवोक्तम्। उभयेऽधममध्यपूजिता द्रेष्काणैश्चरभेषु चोत्क्रमात्। अशुभेष्टसमा स्थिरे क्रमाद्धो
रायाः परिकल्पिता दशेति॥ इदानीं दशाक्रममाह॥ ॥ स्यादाद्याहि दशाधिकौजसद्व्हाङ्गार्कोब्जकानां ततस्तत्के
न्द्रादिषु जामथद्विबहवो वीर्यक्रमेणैव हि। चेदोजः समता पुषोऽधिकतया पुस्तुल्यता चेद्दशामौढ्यात्स्यादुदि
तक्रमात्क्रमविधौ वीर्यं हि तत्रोच्यते॥ ३०॥ अङ्गार्कोब्जकानां लग्नसूर्यचन्द्राणां मध्ये येषां यः किंचिदप्यधिकषड्

राम:
८०

लैक्यस्तस्याद्याद्दशास्यात्। बलसाम्ये यस्यायुर्वर्षाण्यधिकानि तस्य प्रथमा दशा। आयुःसाम्ये तु पूर्वं पठितस्य प्रथमाद
शा। लग्नार्कचन्द्राणां लग्नार्कयोर्लग्नचन्द्रयोर्वा बलायुषोः साम्ये लग्नस्य प्रथमं पठितत्वादाद्या दशा। सूर्येन्द्वोर्बलायुषो
स्तुल्यत्वे सूर्यस्य प्रथमा दशेत्यपि ध्येयम्। केचित्त्वार्केन्दूदयानामिति पठन्ति। तदयुक्तम्। लग्नार्कचन्द्राणामिति क्र
मस्य सर्वैः पठितत्वात्। तथा च गर्गः। बली लग्नार्कचन्द्राणामिति। बृहज्जातके। उदयरविशशाङ्केति। लघुजातके लग्ना
र्कशशाङ्कानामिति। श्रीनाभेयपद्धतौ लग्नार्कशीतरश्मीनामिति। सारावल्याम्। लग्नार्कशीतरश्मीनामिति। होरामकर
न्दे। विलग्नार्केन्दूनामिति। श्रीपतिपद्धतावपि। लग्नादित्योडुपानामिति। एवं सर्वेषां प्रामाणिकरीत्या पाठक्रमात्तस्य ४८
च बलायुःसाम्ये दशाक्रमनिर्णयप्रयोजकत्वाच्चाङ्गार्काब्जकानामिति पाठः साधीयान्। अब्ज एवाब्जकः स्वार्थे कप्रत्ययः
ततोऽनन्तरं लग्नार्कचन्द्रान्यतमस्य यस्य पूर्वा दशा तस्मात्केन्द्रपणफरापोक्लिमस्थानां ग्रहाणां दशाः स्युः। केन्द्रस्थस्य पूर्वं
दशानन्तरं पणफरस्थस्य तदनन्तरमापोक्लिमस्थस्येत्यर्थः। अथ यदि केन्द्रादिगता द्वित्र्यादयो भवेयुस्तदा वक्ष्यमाणवी
र्याधिक्यशालिनो ग्रहस्याद्या दशा तदनन्तरं ततोऽल्पवीर्यस्य तदुपरि तस्मादप्यल्पबलस्य दशा स्यादित्यर्थः। अथ रवीन्दू
न्यतरस्याद्या दशा तदा तत्केन्द्रादिस्थलग्नस्यापि दशा स्यादिति बोध्यम्। बलसमत्वे अधिकवर्षदातुः पूर्वा दशानन्तरमल्प

प्रै.म. वर्षे तत्तुदशास्यात्। वर्षसाम्येतु मौढ्यात्तूर्यसं॥ विध्यवशेनास्तमनादुदितक्रमाद्दशास्यात्। मौढ्यादितिल्स ब्रौ पेपञ्चमी।
८१ मौढ्यमंप्राप्येत्यर्थः। यस्मैनास्तनभावेनास्तंप्राप्तस्यपूर्वमुदूमस्तस्यपूर्वादशानन्तरोदितस्यानन्तरंदशा। अत्रोदयसाम्ये
उदितक्रमाल्लग्नार्कसोमावनिजबुधे त्याद्युक्तक्रमाद्दशास्यादितिध्येयम्। सहजातकेवर्षसाम्येप्रथमोदितस्यप्रथमंद
शेत्युक्तंतत्रप्रथमोदितस्येतिसामान्यतः कथनमर्थद्वयलाभार्थम्। सूर्यवशात्प्रथममुदितः प्रथमोदितइत्येकोर्थः। प्रथम
मुदितउक्तइतिद्वितीयः। अनयोर्मध्येबहुसंमतत्वात्प्रथमपक्षोमुख्यइतरोगौणइत्याहुः। तत्रसूर्यवशादुदयसाम्येप्रथ
मपक्षेणनिर्णयासंभवेगौणपक्षेणनिर्णयोयुक्तएव। तथाचयवनेश्वरः। वयोधिकोयः प्रथमोदितोवाग्रहः सपूर्वंपठितो
दशेशः॥ अस्यार्थः। बलसमानतायांसत्यांयोवयसायुषाधिकः सपूर्वंदशेशः। यदिचायुःसाम्यमपितदासूर्यवशात्प्रथ
मोदितोयः सपूर्वंदशेशः। यद्युदयसाम्यमपितदायः पूर्वंपठितः सदशेशइति॥ अत्रेदमवधेयम्॥ चन्द्रस्याद्यायांदशा
यांकेन्द्रादिगानांलग्नार्कभौमगुरूणांबलायुषोः साम्येलग्नार्कयोः सूर्यवशात्प्रथमोद्गमनलक्षणप्रथमपक्षस्यासंभवा
दपरपक्षाश्रयणेनलग्नस्यप्रथमोक्तत्वादाद्यादशाततोर्कस्यद्वितीया। भौमगुर्वोर्यः सूर्यवशात्प्रागुदितस्तस्यतृतीयाप राम:
रस्यचतुर्थीदशा। उदयसाम्येतुगौणपक्षेणनिर्णयेप्राप्तेप्रथमंपठितत्वाद्भौमस्यतृतीयाचतुर्थीगुरोरिति। अतएवमिश्रो ८१

कपद्दतौ तस्यापि साम्ये प्रथमोदितस्य लग्नार्कचन्द्रारबुधादिकस्येति। यत्तु मिश्रकृतश्रीपतिपद्धतिटीकायां लग्नस्य तृ
तीया चतुर्थी सूर्यस्येत्यादि दृश्यते तल्लेखकदोषात्पतितमिति ध्येयम्। इदं पुनरिहावधेयम्। यदि केन्द्रे कोऽपि न ग्रहस्त
दा पणफरस्थस्य पूर्वा दशानन्तरमापोक्लिमस्थस्येत्यादि। तदाह वराहः। नहि न फलविपाकः केन्द्रसंस्थाद्यभावे भव
ति हि फलपक्तिः पूर्वमापोक्लिमेपि॥ इदानीं लग्नदशाप्राथम्ये सति तत्केन्द्रादिगग्रहदशाक्रमावगमार्थं बलं साधयति॥
॥ ॥ चेल्लग्नाद्यदशा स्वभावजफलघ्नौजांशैः पाकक्रमे ॥ ॥ भोजांशैः स्वषड्बलैक्यानि। पाकक्रमे इति निमि
त्तसप्तमी। पाको दशा तत्क्रमनिमित्तं बलानि स्युरित्यर्थः। शेषं स्पष्टम्। अत्रोपपत्तिः। लाग्निकदशाप्राथम्ये लग्नाद्भावाः स
न्तीति लग्नात् केन्द्रपणफरादयो भावाः सिद्धा जातास्तथा सत्येको भावांशतुल्ये मुख्ये केन्द्रेऽन्यो गौणकेन्द्रे स्थित इति संपूर्ण 8
न्यूनभावफलौ। किमनयोः मुख्यं गौणकेन्द्रादिस्थित्यावचनाद्बलेन च दशाक्रमविचारे प्राप्ते समभावफलेषु सर्वेषु ग्रहेषु
यथास्थितबलेन निर्णयो यस्याधिकं बलं पूर्वं तस्य दशा ततस्तदूनबलस्येति। तत्र रूपतुल्ये समभावफले कल्पिते त्रानु
पातः। यद्यखिलखगानां रूपतुल्ये समभावफले ग्रहस्यैतद्बलतुल्यं बलं तदमुष्मिन्भावफले किमिति स्वभावजफलघ्नौ
जांशैरुपपन्नम्। अथार्कस्य चन्द्रस्य वाद्यदशायां केन्द्रादिगदशाक्रमज्ञानार्थं वीर्यमाह ॥ ॥ अर्केन्द्वोश्चेत्प्रथमा

मास्वोच्चत्रिकोणस्वाधिमित्रमित्रवैर्यधिवैरिगृहजयपराजयोत्पातास्तनीचेषु समाश्रितानां संबन्धित्वं हिताहितत्ववि
शिष्टं विचिन्त्यम्। रिष्टेशभङ्गेशयोः सप्तवर्गेशान् सौम्यपापान् दर्शितस्वोच्चादिनीचान्तसमाश्रितांश्चैते हिता एते त्वहिता
इति चिन्तयेदित्यर्थः। रिष्टेशभङ्गेशयोः सौम्यपापत्वचिन्तनं वि यद्दर्शिततुङ्गादिनीचान्तसमाश्रयत्वं च हिताहितत्वेन
चिन्त्यम्। तथा च श्रीधरः। वर्गनाथान्विचिन्त्यादौ सौम्यपापान् हिताहितान्। नीचोच्चगांस्तथान्यांश्च शोधयेत्तान्परस्पर
मिति॥ अत्र समस्यार्द्धमित्रत्वार्द्धशत्रुत्वेन हिताहितत्वसाम्यात्समो न गणनीय इति प्रोचुः। एकेन शुभेन समं मित्रमधिमि
त्रं च। एकेन पापेन समानममित्रमध्यमित्रं च॥ द्वाभ्यां शुभाभ्यां समं त्रिकोणं स्वगृहं च। चतुर्भिः शुभैः समानः स्वोच्चो यु 82
द्धजयश्च। चतुर्भिः पापैः समो नीचस्थऔत्पातिको युद्धजितोऽस्तंगतश्च। तथा सति रिष्टकरस्य सप्तवर्गेशानां सौम्यपाप
त्ववशेन स्वाधिमित्रादिगृहस्थितिवशेन दर्शितस्वोच्चादिवशेन च याहितसंख्या या चाहितसंख्या तयोरन्तरं कृत्वा
हितमहितं वा शेषं ग्राह्यम्। एवं भङ्गेश्वरस्यापि हितमहितं वा शेषं ग्राह्यम्। पश्चाद्रिष्टेशभङ्गेशयोर्द्वयोरपि यदि
हितात्मकशेषं तदा रिष्टभङ्गो यदा रिष्टकर्तुरहितात्मकशेषाद्रिष्टभङ्गकर्तुर्हितात्मके शेषेऽधिके रिष्टभङ्गस्तथारिष्ट
हरस्याहितशेषाद्रिष्टकरस्य हितशेषेऽधिके रिष्टभङ्गो न्यथा तु रिष्टमेवेत्यप्याहुः॥ अथ रिष्टकररिष्टहरबलानयने ताव

ग्री॰म॰ द्रुपपरिहृच्यते। वृद्धयवनः। हेतीपमृत्योर्बलिनस्तु वर्गे भङ्गस्तदारिष्टकराद्बली चेत्। रिष्टकर्तान्यूनबलस्य सप्तवर्गे
८३ न्यूनबलो रिष्टकर्तुरपेक्षया रिष्टहन्ता बलिनः सप्तवर्गे बलाधिकस्तदारिष्टभङ्गोऽन्यथा तु रिष्टमेव॥ अयमर्थः रिष्टकर्तान्यू
नबलस्य राशौ न्यूनबलस्तथा न्यूनबलस्य होरायां न्यूनबल इत्यादि तदपेक्षया रिष्टभङ्क्ता बलिनो राशौ बली तथा बलि
नो होरायां बलीत्यादि। अत्र प्रागुक्तयवनवाक्ये स्पष्टो द्विवर्गात्मकत्वमित्यष्टौ वर्गास्ततो रिष्टेशभङ्गेशयोर्बलमष्टसु स्था
नेषु स्थाप्यं तत्र द्वे स्थाने ग्रहसंबन्धिनी षट्स्थानानि होरादिसंबन्धीनि। अत्र रिष्टेशभङ्गेशयोर्द्वयोरपि सप्तवर्गेशबला
नां साम्ये यथास्थित सप्तवर्गेशबलेन निर्णय इति स्थितौ सुगमार्थमष्टतुल्ये समबले पूर्वस्थापनेन साकमेकक्रमला
भार्थं कल्पिते तत्र त्रैराशिकम्। द्वयोरपि वर्गेशानां सर्वेषामष्टतुल्ये समबले स्थिते यदि राशीशस्याष्टतुल्ये समबले राशि
स्थबलतुल्यं बलं तदास्मिन् राशीशबले किमिति राशिस्थबलं राशीशबलेन गुणनीयमष्टभिर्भाज्यमेवं राशिसंबन्धि
द्वितीयस्थानस्थबलं राशिनाथबलेन गुणनीयमष्टभिर्भाज्यमनयोर्योगे राशिस्थबलमेकस्थानस्थमेवं राशीशबले
न गुण्यं चतुर्भिर्भजनीयमित्युपपन्नम्। एवं होरादिस्थबलं होरादीशबलेन गुण्यमष्टभिर्भाज्यमित्युपपन्नम्। यद्वा रामः
द्वयोरप्यष्टस्थानस्थे तुल्ये समे बले स्थिते यदि राशिस्थे समबले ष्टतुल्ये राशीशबलतुल्यं बलं तदस्मिन् राशिबले किमिति ८३

स्वांचराशिस्थराशीशबलघातोष्टभक्तोनिष्पन्नइत्यनयोःपक्षयोर्नकोपिविशेषइतिमिश्राः।पश्चादेषामेकंसर्वब
लमितियुक्तम्।यत्सर्वबलमधिकंतन्मूलमप्यधिकमितिसर्वबलस्यमूलग्रहणेनकापिहानिः।यत्तुप्रत्येकंमूलमा
दायतदैक्यंसर्वबलमितिमतंतन्निर्मूलत्वादुपेक्ष्यम्।किंचयत्ररिष्टहर्तुर्बलयोगाद्रिष्टकर्तृबलयोगोधिकस्तत्ररिष्टह
र्तुर्बलमूलयोगाद्रिष्टकर्तृबलयोगःस्वल्पइत्यादिदूषणंधीमद्भिरवलोक्यम्।यत्तुश्रीपतिनेष्टकष्टगुणितबलयोरन्त
राद्बलमित्युक्तंतत्रमतस्तथासतिरिष्टकरस्यभङ्गकरस्यवाबलपूर्णपदोच्चचेष्टाबलयोगोरूपंतदेष्टकष्टबलयोःसाम्या
वदन्तरबलेशून्येसर्वबलस्यशून्यत्वात्सद्बलपूर्णोपिग्रहोरिष्टकर्तारिष्टहर्तावानस्यात्।स्वप्राचीनश्रीधराचार्यविरो 83
धश्च।अन्यान्यपिदूषणानिश्रीकेशवप्रणीतटीकातोऽवसेयानीतिसंक्षेपः।अथशुभासत्वमित्याद्युदाह्रियते।तन्त्रे
ऽस्मत्षड्वर्गचक्रंग्रहाणाम्।अत्ररिष्टकर्ताभौमश्चतुःशुभात्मकस्तोच्चस्थएकशुभात्मकमित्रगृहस्थःपञ्चसंख्याकसौ
म्यवर्गस्थोभौमत्रैराश्यचन्द्रएकशुभात्मकमित्रगृहस्थोभौमत्रिंशांशेशोगुरुरेकशुभात्मकाधिमित्रगृहस्थइतिशुभा
त्मकयोगोद्विसंख्याजाता१२।एवंभौमोद्विसंख्याकपापवर्गस्थोभौमराशीशःशनिरेकपापात्मकशत्रुगृहस्थोभौम
द्रेष्काणपादित्रिकस्वामीशुक्रश्चतुःपापात्मकास्तंगतश्चतुःपापात्मकनीचस्थश्चभौमहोरेशोबुधश्चतुःपापात्मका

 सेमन्तो द्विशुभात्मकस्वगृहस्थ इति द्विपापात्मक इति तद्योगे जाता चाहितसंख्या २९। हिताहितसंख्ययोरन्तरे १। प
 महितात्मकं भौमस्य १७। एवं रिष्टहर्तुर्गुरोर्हिताहितसंख्ये १२।८ अनयोरन्तरे शेषं हितात्मकं गुरोः। अत्र रिष्टकर्तु
र्भौमस्याहितशेषाद्रिष्टहर्तुर्गुरोर्हितशेषमल्पमित्यरिष्टमेव। अत्रेदमवगन्तव्यम्। यत्रोच्चत्रिकोणं स्वगृहं च प्रा
प्तं स्यात्तत्रोच्चमेव ग्राह्यम्। यत्र तु त्रिकोणस्वगृहे प्राप्ते स्यातां तत्र मूलत्रिकोणमेव ग्राह्यम्। अत्र तु स्वोच्चाधिमित्रगृ
हादिकं त्रिकोणाधिमित्रगृहादिकं वा प्राप्तं तत्र बाधकाभावात्तत्फलमपि ग्राह्यमिति। अथ केन्द्रादिगेषु समवी
र्येषु यद्येको बलिनः सप्तवर्गेऽन्यो निर्बलस्सप्तवर्गे तदानयोः पौर्वापर्येण दशाक्रमनिर्णये न्याय्ये पूर्ववदिष्टस्थान
स्थं बलं तत्तद्वर्गैक्यबलगुणितमेषां योगे पूर्ववत्सर्वबलं सिद्धम्। शेषोपपत्तिः सुन्दरमिश्रमवलोक्येति संक्षेपः
॥ ॥ येष्टरिष्टहतौ दशाक्रमदूहो जः श्रीधराद्योदितं कष्टेष्टघ्नबलान्तरात्क्वचकृतं तद्युक्तिशून्यं त्वस
त् ॥३२॥ व्याख्यातचरमेतत्॥ इदानीमन्तर्दशानयनमाह॥ ॥ अर्द्धं स्यैकभगस्त्रिकोणगृहगस्त्र्यंश
स्य चास्तिनगांशस्याङ्घ्रिश्चतुरस्रगो निजगुणैः पत्कैकभे स्याद्दली। अंशादौ कुरु रूपमत्र समतां कृत्वा 
चनांशांश्छिदामंशघ्नाः स्वदशाः पृथक् खलु लवैक्याप्ताः स्युरन्तर्दशाः॥३३॥ मूलदशापतेरेकभगस्यैकरा 

कस्यैवान्तर्दशापाचकत्वंस्यात्।नचेष्टापत्तिःअपसिद्धान्तात्।तस्माद्युक्त्याएकस्यान्तर्दशेतिनसाधु।किंतुवचना
८५ द्वि।तथाचमयः।एकर्क्षोपगतानांयोभवतिबलाधिकोविशेषेण।एकःसएवहर्तानान्येतत्रस्थिताविहगाइति।व
स्तुतस्तु।बहवश्चेत्तुतेखिलाः।केन्द्रादिगाग्रहाःसर्वेदद्युस्त्वेवापहृत्यचेतिपराशरोक्तेरन्तर्दशाप्रदास्युरितिचतुर्णांमे
कराशिसंस्थानाम्।जन्मनिविनाशदैन्यविद्यासुशुभग्रहाणांत्वितिसारावल्यामुक्तत्वान्निकृष्टार्थप्रतिपादकवरा
हादिभिरेकराशिगानामेकोंशंहरतिबलीत्यादिषदनुक्तत्वाद्दर्शितमयवचनस्यचक्रार्द्धहानिगुणकविषयकत्वा
देकभस्त्रिकोणगृहगइत्याद्याम्नातैकत्वस्योद्देश्यविशेषणत्वेनग्रहैकत्ववदविवक्षितत्वाच्चैकराशिगाःसर्वेपिअन्त
र्दशापाचकाइति।अतोत्रपक्षैकभेतेखिलाइतिपठितव्यम्।एकभेवर्तमानास्तेग्रहाअखिलाअपिफलकाराःस्युरित्य
र्थः।नन्वमयवाक्यादेकस्यैवान्तर्दशाप्रदत्वंशङ्क्यम्।तस्यचक्रार्द्धहानिविधायकहरनिर्णायकत्वादित्युक्तम्।
हर्तेतिपदाम्नानसामर्थ्यात् अन्यथाएकःसएवदातेतिवदेत्।बहवश्चेदित्यादिपराशरवाक्यस्यायमर्थः।चेदे
कभेबहवोग्रहाःस्युस्तदातेखिलाअपियथोक्तंभागंमूलदशापतेरपहृत्यस्वभागंददतिप्रयच्छन्ति।अत्राखिला राम:
इत्युक्तेपिपुनःसर्वेइतिपदोपादानंसर्वेपिअन्तर्दशापाचकाःस्युर्नत्वेकइतिदार्ढ्यार्थम्।ननुभवन्तुनामसमेवर्गे ८५

प्यन्तर्दशाप्रदाः कानोह्यमनिस्तथाप्यन्तर्दशाक्रमः कथं स्यादित्यतो विशेषणद्वारेणाह। केन्द्रादिगा इति। एकराशिगा
नां मध्ये यः सर्वाद्यदशापतेर्लग्नार्काब्जान्यतरस्मात्केन्द्रगस्तस्य प्रथमान्तर्दशा। तदनन्तरं पणफरस्थस्य तदनन्तर
मापोक्लिमस्थस्य केन्द्रगेषु बहुषु यस्य दशाक्रमवीर्यं बहु तस्याद्यान्तर्दशानन्तरं तदूनबलस्य एवं पणफरापोक्लिम
स्थेष्वपि बलसाम्ये बहूनां पुंःक्रमेणायुःसाम्ये प्रथमोदमक्रमेण तत्साम्ये प्रथमोक्तक्रमेणान्तर्दशा स्यादित्यर्थः॥ सर्वाद्य
दशापतेस्त्वन्तर्दशाऽऽद्ये प्रथममन्तर्दशास्यैव कार्या। तेन यस्य पूर्वं दशा तस्यान्तर्दशापि पूर्वमेवेति दशाक्रमादन्तर्द
शाक्रमः स्यादिति भावार्थः। अत्र बहुषु एकराशिस्थापाठात्पाठक्रमादन्तर्दशाक्रमः स्यादित्येके। दशाक्रमादन्तर्दशेत्यन्ये। 95
त्रिकोणयोश्चतुरस्रयोरेकभे सप्तमे वा बहुषु सत्सु पाठक्रमेण निर्णयासंभवे दशाक्रमवशेन निर्णय इत्युभयोः पक्ष
योः समुच्चयो न तु बाध्यबाधकभाव इत्यपरे॥ अत्र ब्रूमः॥ ॥ मूलपाकपतिः पूर्वं दद्यादन्तर्दशां ततः। दशाक्रमवशाद
न्ये दद्युरन्तर्दशाग्रहाः॥ इति भगवद्गर्गवाक्यात्केन्द्रादिगा इति प्राग्दर्शितपराशरवाक्यात्तथा केन्द्रादिदायगस्य तु सर्व
स्मिन्नाकद्युसदो बलानि तद्बलसाध्यान्यधिकं हि यस्य। द्युचारिणस्तस्य दशाग्रमा स्यादन्तर्दशा वा विदशाद्युपावेति श्रीप
त्याचार्यकेष्व दशाक्रमवशादेवान्तर्दशाक्रम इति। दायगस्य तु सर्वस्य सहगस्य दलं भवेत्। सुतधर्मगयोस्त्र्यंशः पादं म

ग्रौ·मं· तिसुखस्थयोः। सप्तांशंसप्तमस्यस्वप्रक्रियाप्यधुनोच्यत इति पराशरजातके दशार्द्धमेकगेहयस्त्रिकोणगोगुणांश्चक
८६ मासुखेष्टमेषु मांशकं नगांशमस्तभस्थित इति ज्ञात्वा गिपद्धतौ तथा अर्द्धतृतीयमर्द्धीच्चतथार्द्धसार्द्धसप्तमं भागम्। एकर्क्ष
नवपञ्चमचतुर्थनिधनर्क्षसप्तानामिति भट्टोत्पलोदाहृतसत्याचार्यवाक्ये त्रिभागभागी च त्रिकोणसंस्थ इत्यादियवने
श्वरवाक्ये च पाठभेददर्शनात्सर्वग्रन्थेष्वेकरीत्या पाठात्पाठक्रमेणान्तर्दशाक्रम इति पक्षो न चारुचातुरीगोचरः। अत
एव समुच्चयपक्षोऽपि न रमणीयः। किंच यदि पाठक्रमं नैव पर्यभिप्यात दृशादन्तर्दशाक्रमः स्वीक्रियते तदा सर्वत्रैकव
चननिर्देशादेकराशिगानामेकस्यैव बलिष्ठस्यान्तर्दशास्त्वित्यनिष्टापादनम्। ननु तथापि पाठक्रमादन्तर्दशाक्रम इ
ति पक्षस्य बहुसंमतत्वादनेन दशाक्रमवशादन्तर्दशाक्रम इत्येकसंमतपक्षस्य बाध इति चेन्न। यातैषम्याणां न
पश्यतीति न्यायादेकेनापि गर्गवाक्येन बहूनामिदानीतन वाक्यानामन्धस्थानीयानां प्रतिबन्धसंभवात्। तस्माद्द
शाक्रमवशादन्तर्दशाक्रम इति मर्गेणाकण्ठरवेणोक्तत्वादत्र भवतोऽस्य लेनाप्यस्यैवाङ्गीकरणाच्चायमेव पक्षो ज्याया
निति सद्गुरूणां मतम्॥ ॥ अंशादाविति॥ ॥ स्पष्टं समच्छेदविधानं लीलावत्याम्। अन्योन्यहाराभिहतौ हरांशौ रा राम:
श्योः समच्छेदविधानमेवमिति। स्वदृशेत्यत्र स्वशब्देन मूलदशापतिः। अत्रोपपत्तिः। येऽन्तर्दशापाचका अर्द्धन्यादयो ८६

शयंशप्राप्तास्तज्जन्यान्तर्दशायोगो दशातुल्य इति तावत्स्वसिद्धम्। तस्माद्दशायोगेन दशातुल्यान्तर्दशा लभ्यत इति निष्प

न्नं तत्र सदृशच्छेदानामंशानां योगेनान्तरं वा कार्यमित्युक्तेः छिदां समतां कृत्वेत्युपपन्नम्। अत्रोदाहरणम्। अंशाः

| द | स | त्रि |
|---|---|---|
| १ | १ | १ |
| १ | ७ | ३ |

समच्छेदीकृता एते

| | | |
|---|---|---|
| २१ | ३ | ७ |
| २१ | २१ | २१ |

अथानुपातः। यद्यंशयोगेनानेन २१/२१ दशातुल्यान्तर्दशा तदा पृथक् पृथगंशकैः कियत्यन्तर्दशेति। अत्र सच्छेदांशगुणदशांशः सच्छेदांशयोगेन ह्रियमाणा यां छेदलवं च परिवर्त्य इत्यादिना दशांशच्छेदे गुणो हरश्च तुल्यत्वात्तयोर्नाशो भविष्यतीति प्रागेव छिदां नाशं कृत्वेत्यपि साधूक्तम्। एवं छेदापगमे कृतेंऽशाः स्वदशांशयोगेन भाज्यान्तर्दशा स्यादित्युपपन्नम्। इदानीं प्रत्यब्दमासद्युनिशाघटीजन्यसूक्ष्मफलज्ञानार्थं विदशादिसाधनमाह॥ ॥ इत्थमाभ्यो विदशास्ततोऽप्युपदशास्ताभ्यश्च सूक्ष्मं फलम्॥ ॥ इत्यमुना प्रकारेण आभ्योऽन्तर्दशाभ्यो विदशाः साध्याः। अयमभिसंधिः। अन्तर्दशा एव दशाः कल्प्याः। अन्तर्दशापतिर्दशापतिः कल्प्यः। ततोऽङ्कसैकभग इत्याद्युक्तप्रकारेणान्तर्दशामध्ये विदशाः साध्या इति तथा विदशा दशा विदशापतिर्दशापश्च प्रकल्प्य विदशामध्ये उपदशाः साध्याः। एवमग्रेऽपि द्रष्टव्यम्। तथा सति सूक्ष्मं फलं स्यादित्यर्थः॥ अथान्यदाह॥ ॥ पक्ष्यंशोऽनदिनहृत्यं तु कलयेत्तासु: कृतं दृश्यते॥ पक्षैः खेटलवान्तरेण च भवेन्मासान्तरं चाप्युषः प्रोक्तैस्तु द

प्रौ॰म॰ शादिलग्नजफलंतेभ्योतिदृग्भ्योनमः॥३०॥ एककलातुल्येनग्रहान्तरेणयदिनवांशकलाभि २०० रेकंवर्षंत
८७ दैककलयाकिमित्यनुपातेनायुषएकंदिनमष्टाचत्वारिंशत्घटिकाश्चान्तरंपतति।ब्रह्मसौरार्यादिभिः पक्षैर्ग्रहा
णांभागाद्यमन्तरमस्ति।तेनायुर्दायस्यमासाद्यन्तरंस्यात्।किंचजन्मकालस्यपलमात्रान्तरेणलग्नषट्कलाअन्तरंते
नचदशादिनान्यायुषोन्तरंपतति।एवमायुषोन्तरेसंजातेदशाप्रवेशस्यान्तरंस्यात्।तथासतितत्कालीनलग्नफलंयैरा
चार्यैःश्रीपत्यादिभिरुक्तंतेभ्योतीतदृग्भ्योनमोस्त्विदमुपहासः।यद्यपियत्नैःस्पष्टतरोऽत्रजन्मसमयोवेद्योऽत्रखेटाःस्फुटाय
त्नेनैवहिघटन्तेतत्सर्वंकार्यमितिप्रागुक्तमस्तितथाकृतेआयुषोन्तरमपिनपतिततथापियदिजन्मकालग्रहादिसाधनं
स्पष्टतरंनक्रियतेतदैवात्दशमन्तरंपतिततस्मात्स्पष्टतरंतत्साधनंकार्यमितिशिष्यावधानार्थमेतदुक्तमितिबोध्यम्॥अत
एवदशाप्रवेशकालीनलग्नसाधनंवदति॥ ॥शाकोब्दाजनिमध्यमार्कभमुखंमासादितद्युगदशाब्दाद्यंतत्र
शकेसमादितरणिर्मध्योदशादेर्भवेत्।घस्रीभूतदशाद्यथक्त्रिकु १३ हृताखाङ्काष्ट ८९० हृतद्युतासास्या
त्तावनिकादशाब्दफलयुक्तद्युकृजनिद्युव्रजः॥३५॥ तस्मात्तावयवाद्गणात्खकरणात्साध्याद्दशादौख
गाःक्षेपान्जन्मखगात्प्रकल्प्ययदिवासाध्याद्दशासावनात्। तेस्पष्टाश्चतिथिश्चसंक्रमवशान्मासोदशादौ ए॰म॰ ८७

ततः पूर्वोक्तं जडकर्म चात्र तु मयातल्लाघवं दर्शितम् ॥ ३६ ॥ ॥ शाकएवाब्दाः कल्प्याः जनिमध्यमार्क
राश्यादिकं मासादिकल्प्यम् । तेनाब्दादिना युक्तं दशाया अब्दाद्यं कार्यम् । एवं कृते यः शक उत्पद्यते यच्च राश्यादि तत्र श
केसराश्यादितरणिर्मध्योदशादौ भवेत् । तत्र शके सराश्यादि सूर्यो मध्यमो मह्यं भवति तदा दशाप्रवेशः स्यात् । ए
तदुक्तं भवति । जन्मकालीनशके जन्मकालिकरवौ सर्वाद्यदशापतेर्लग्नसूर्यचन्द्रान्यतरस्य दशाप्रवेशः । तदनन्तरं तत्रा
ब्दमासादौ सर्वाद्यं दशेशदशाब्दाद्यं योज्यं तदग्रिमदशाप्रवेशः स्यात् । एवमग्रेपि यद्दशावर्षाणि योज्यानि तत्तदग्रिम
दशाप्रवेशः स्यात् । एवं सामान्यतो दशाप्रवेशे ज्ञाते तात्कालिकमासाद्यानयनार्थमाह । घस्रीभूतदशेति । दशावर्षाणि
द्वादशगुणानि तत्र लस्यमासयुतानि मासाः स्युः । तान् त्रिंशता संगुण्य तत्र दिनानि योज्यानि सा घस्रीभूतदशा भवेत् । सा
ष्टयक्ष्यात्र योदशगुणा स्वाङ्काष्टभि ९८० भक्ता लब्धेन दिनाद्येन ष्टयक्ष्या युक्ता कार्या । दशाब्दतुल्यैः पलैश्च युक्ता का
र्या सा सावनदिनात्मिका दशा भवति । तया सावनदशया युक्युक्तः जन्मकालिकोहर्गणः कार्यः । स दशाप्रवेशेहर्गणो
भवति । जन्मदिनजार्कोदयिकोहर्गणोर्कोदयाद्गतनाडीपलयुतो जन्मकालिको द्युव्रजो भवतीति ध्येयम् । द्वितीयादि
दशासावनयुतो द्वितीयादिदशाप्रवेशकालिको द्युगणस्तृतीयादिदशाप्रवेशकालिको भवतीत्यपि द्रष्टव्यम् । तस्मा
त्तावधयादहर्गणात् जन्मकाले यस्मात्करणाद्ग्रहाः साधितास्तत्करणोक्तप्रकारेण दशाप्रवेशे खगाः साध्याः ॥ विधा

प्रौ·म· ८८

न्तरमाह।क्षेपान्जन्मखगान्प्रकल्प्येति।दशासावनदिनाद्यमेवसावयववत्सुगुणंप्रकल्प्यजन्मकालिकंचरदेशान्तराद्य
संस्कृतमध्यग्रहतुल्यंक्षेपंचप्रकल्प्यस्वकरणाद्ग्रहाःसाधनीयाः।परमत्रदशासावनेजन्मकालादारभ्यव्यतीतदशा
सावनोपेतंग्राह्यमितिबोद्धव्यम्।यद्वाकेवलदेश्यसावनतुल्याहर्गणात्पूर्वदशाप्रवेशकालिकखगान्क्षेपान्प्रकल्प्य
ग्रहाःसाध्याइत्यपिद्रष्टव्यम्।ततःपक्षत्रयेणापियेसाधिताग्रहास्तेलङ्कापूर्वक्षितिजासन्नप्रदेशमध्यार्कसंबन्धकाला
द्यास्तत्वदशाप्रवेशनाडीतुल्ये।नेहसिजाताअपेक्षितास्तुस्वदेशस्पष्टार्कोदयकालदशाप्रवेशनाडीतुल्यकालइत्युद
यान्तरचरदेशान्तरभुजान्तरसंस्कृताःकार्याः।संस्कारस्तुदिनार्द्धतुल्याभीराश्यर्द्धतुल्याभिर्वानतघटीभिरेताभ्यःरकला
स्तदेष्टनतघटीभिःकिमित्यनुपातलब्धकलाभिःकार्यइत्याहुर्भोष्यकृतः॥अथतेग्रहाःस्पष्टाःकार्याः।ततःस्फुटार्के
न्दुभ्यांविरविचन्द्रलवाविहृतादित्यादिनातिथिश्चसाध्या।तस्याघटिकाद्यंदशाप्रवेशकालिकरवीन्दुभ्यांसाधित
त्वाद्दशाप्रवेशकालादनन्तरंस्यादतोदशाप्रवेशनाडीमुखेनसंस्कृतंसूर्योदयाज्जायतइतिधीमद्भिःखलेःकयम्।या
तिथिरानीतासायदिपञ्चदशभ्योन्यूनातदाशुक्लपक्षोन्यथाकृष्णपक्षइतिज्ञेयम्।संक्रमवशान्मासोज्ञेयः॥ ॥अत्रे रामः
दमवधेयम्।स्पष्टसूर्यस्यभुक्तानांभोग्यानांचांशानांकलाःस्पष्टगत्याभक्तालब्धदिनादिद्वयेनदशाप्रवेशकालात्प्र ८८

गृ(?)र्ध्वं चक्रमेण पूर्वापरसंक्रान्ती भवतः। ततो यस्मिन् दर्शापतावधिके मासि वृत्तिस्तत्र यदि मेषसंक्रमणं तदा
स चैत्र एवं वृषादिसंक्रमणे वैशाखादिसंज्ञा। यदा तु पूर्वसंक्रान्तिः पूर्वदर्शान्तात्प्रागपरसंक्रान्तिरग्रिमदर्शान्तादनन्त
रं भवति तदा सो संक्रान्तिमासोधिमासोग्रिममासनामा भवति। यदा संक्रान्तिद्वयं तन्मास एव तदा क्षयमास इति ॥
॥ प्रथमपक्षेऽहर्गणः सप्ततष्टः करणादिवाराद्गतो वारो भवेत्तन्नाडिकाद्यमेव सूर्योदयादिष्टकालः। द्वितीये अहर्गणे
जन्मनाडीपलयुतः सप्ततष्टे जनुर्वाराद्गतो वारस्तदधःस्थनाड्याद्यमेवेष्टकालः। तृतीये द्युगणः पूर्वदशाप्रवेशनाडी
पलयुतो द्वितष्टः पूर्वदशादिवाराद्गतो वारोऽधःस्थनाडीमुखमेवेष्टकालः। प्रथमपक्षे जन्मकालिकसूर्यसिद्धान्ताहर्ग ४
णे यदि दशासावनं योज्यते तदाहर्गणनाड्यो रात्र्यर्द्धोनाः सूर्योदयादिष्टकालः स्यादिति रवैः श्रीपत्यादिभिर्यु
गार्कचक्रैर्युगसूर्यसावनदुत्यादिना जडकर्म कृतम्। अत्र तु मया तस्माल्लाघवं दर्शितम्। यावर्दपादित्यमात्रं
पूर्वोक्तत्वान्मयाप्युक्तमित्युक्तं तदापात इति वेदितव्यम्। अत्रोपपत्तिः॥ वर्षायनर्तुयुगपूर्वकमत्र सौरादित्युक्ते
र्यदस्यादिवसाः कृतास्ते तु सौरा एव। अथ तेषां सावनीकरणमन्तरेण दशाप्रवेशकालिकलग्नादि साध्यितुं न पार्यत
इति सावनीकरणार्थमुपायः। तत्रैते सूर्यसिद्धान्तमते युगसावनाः १५७७९१७८२८ सौराश्च १५५५[illegible]००००० सषाम

प्री·म न्तरम्।२२७१७८२८॥अथानुपातः।यदियुगसौरदिनैरेभिः १५५५२००००० सौरापेक्षया सावनेषु तावदाधिक
८९ २२७१७८२८ लभ्यते तदेष्टैः किमिति।अत्र गुणकत्रयोदशांशेन १७४७५२५ गुणके पवर्त्तिते त्रयोदश लब्धाः १३ त
थातेनैव हरे पवर्त्तिते किंचिन्न्यूनाः स्वाङ्काष्टौ ८९० लब्धास्ते संपूर्णा गृहीताः।तस्मादपसीभूतदशाधिकहतास्वाङ्काष्ट
भक्ताब्धेभ्यः सावनेभ्यः सौराणां न्यूनत्वात्पञ्चकस्यापसीभूतदशायुक्ताकार्येत्युपपन्नम्। परमत्र हराधिक्येफलाल्प
त्वनियमात्स्वाङ्काष्टहरस्याधिकस्योपादानाद्युगसौराः पञ्चकस्यास्त्रयोदशघ्नाः स्वाङ्काष्टभक्तालब्धान्विता युगसावने
भ्योल्पाजायन्ते यो युगसावनानां चान्तरमेतत् १४२३॥अथ यदि युगसौरवर्षैः ४३२०००० इदमन्तरं १४२३ तदेष्टैः किमि
ति फलस्य दिनात्मकत्वाद्दिनात्मकं फलमायास्यति।तत्र दिनघटीस्थाने शून्यमेवोपलभ्यत इति पलात्मकं फलानय
नार्थं षष्टिवर्गो गुणः ३६०० अस्यान्तरस्य च वधे जात इष्टवर्षाणां गुणः ५१२२८०० हरश्चायं ४३२०००० स्वल्पान्तरमनयो
रूपेस्य नाशे कृते दशवर्षतुल्यान्येव पलानीत्युपपन्नम्। पूर्वसाधितसावनेषु तावन्न्यूनमासीदतो योज्यमित्यपि साधु।
पूर्वदशाप्रवेशकालीनमध्यमार्कः पूर्वदशामासादितुल्यराश्यादियुतः पूर्वदशासावनोत्थमध्यमार्कजन्मकालीनम राम:
ध्यार्कयोगतुल्यापरदशाप्रवेशजमध्यार्केण यथा समो भवति न तथा स्पष्टार्क इति मध्यमार्क एव दशामासादियोजने ८९

युक्तम्। शेषोपपत्तिः सुगमा बालावबोधाच॥ इदानीं दशाशुभाशुभफलमाह॥ ॥ चन्द्रः प्राप्तदशेश्वरस्य सुहृदुच्च
स्वर्क्षसंस्थो दशानाथाद्धीनवसप्तमोपचयगो दद्याकुभानीति च। यस्मिन्भे त्र विधुः स जन्मनि तनुस्वाद्यादि
भावो यदा तत्तद्वृद्धिकरोऽथ तत्स्वगकरः प्रोक्ते तरस्थानगः॥ ३७॥ प्राप्तदशायाः स्वामिनो यन्मित्रगृहमुच्चं वा त
त्रस्थश्चन्द्रः शुभानि दद्यात्। अथवा कर्कटस्थश्चन्द्रोऽथवा दशेशात्तकाशात्स्वमनवमसप्तमतृतीयषष्ठदशमैकादश
स्थानान्यतरस्थानस्थः शुभानि दद्यात्। एवं शुभफलप्रदे चन्द्रे सति अत्र दशाकाले यस्मिन् राशौ चन्द्रः स राशिर्जन्मका
ले यस्मिन्भावे पतितस्तद्भाववृद्धिकरो भवति। एतदुक्तं भवति। यदि चन्द्राधिष्ठितराशिस्तनुभावे स्यात्तदा शरीरसौख्यं
यदि धनादिभावे तदा धनादिसौख्यमिति। यदि तु शत्रुमृत्युव्ययभावेषु स्यात्तदा तद्भावनाशः। स तत्र कथयति विपरी
तं रिष्फषष्ठाष्टमेष्विति वराहवचनात्। यदि प्रोक्तान्यस्थानस्थश्चन्द्रः स्यात्तदा तदधिष्ठितराशिर्यस्मिन् लग्नादिभावे
तन्नाशः स्यात्। अरिमृत्युव्ययस्थो यदि स राशिस्तदा तद्भाववृद्धिः॥ अथान्यदाह॥ ॥ यद्द्रव्यं खचरस्य भावगृहदृग्यो
गादि सर्वं फलं योज्यं वृत्तिकृति बलादिह दशायां चाथ योवैरयुक्॥ पापः पापदशां विशेत्स च विपक्तताथ
तद्वृद्धिः स्तत्काले बलवान् खगः शुभसुहृद्दृष्टेष्टषड्वर्गगः॥ ३८॥ खचरस्य यद्द्रव्यं वृत्तं स्या अणि ...मेत्यादि

ग्रं॰ भ॰ कं कथितं तत्सर्वं दशायां योज्यं। तथा भावफलदृष्टिफलराशिफलादिकं सर्वं फलजातं दशायां योज्यं। वृत्तिकृतिर्जी
८० विका। अयं देवदत्तः केन कर्मणा जीवनं करिष्यतीत्यादिरूपा दशायां योज्या नन्वेतत् कथं योज्यमित्यत आह। बला
दिति। सबले यस्योक्तं फलं संपूर्णं मध्यबले मध्यं हीनबलेति स्वल्पमित्यर्थः। अथानन्तरं वैरेण युक्तः शत्रुरितिय
वत। क्रूरस्य मूलदशापतेः शत्रुर्यदि क्रूरो मूलदशायामन्तर्दशां करोति तदा विपत्तिः स्यात। अत्रायमभिसंधिः। यदि
क्रूरः क्रूरदशायामन्तर्दशां कुर्यात्तदा विपत्तिः स्यात्। यदि त्वन्तर्दशाकारको ग्रहः पापो मूलदशापतेः शत्रुस्तदा महती
विपत्तिः। यथोक्तं सारावल्याम्। क्रूरदशायां क्रूरः प्रविश्य चान्तर्दशां कुरुते। पुंसां स्यात्तं देहस्तदारियोगे सदैव महानि
तिर्वैरियुगित्यपपाठः। अथैतद्दशारिष्टस्यापवादं वदति। तद्वद्भ-इदइति। अन्तर्दशाकाले कश्चित् बली ग्रहः शु
भमित्रेण दृष्टोऽथवा शुभस्य षड्वर्गगो यद्येष्टाधिकः स रिष्टभङ्गः स्यात्। तथोक्तं सारावल्याम्। प्रवेशे बलवान् खेटः शु
भमित्रैर्निरीक्षितः। सौम्याधिमित्रवर्गस्थो मृत्युकृन्न भवेत्तदेति। अथाष्टवर्गफलस्य स्वल्पत्वाधिकत्वकल्पना
विचारमाह॥ ॥ खेटस्तस्य यदष्टवर्गजफलं पूर्णं शुभं जन्मतस्त्विन्द्वोर्द्विषु च स्वभोच्चभसुहृद्भस्व राम:
त्रिकोणे स्थितयः॥ दुष्टं मध्यफलं विपर्ययगतस्यानिष्टमत्युत्कटं शास्तं स्वल्पतरं खगस्य च वदेत ज्ञात्वा ८०

बलंतत्वतः॥३९॥ जन्मतन्विन्द्वोःवृद्धिषुस्वभोच्चभसुहृद्भस्वत्रिकोणेचयःखेटःअस्तितस्ययच्छुभमष्टव
र्गफलंतत्पूर्णंस्यादित्यन्वयः।तनुश्चेन्दुश्चतन्विन्दूजन्मनितन्विन्दूतयोः जन्मलग्नजन्मराश्योरित्यर्थः।वृद्धिषूप
चयभवनेषुस्वभोच्चभसुहृद्भस्वत्रिकोणदृत्यत्रसमाहारद्वन्द्वः।स्वराशौस्वोच्चेस्वमित्रगेहेस्वमूलत्रिकोणइत्यर्थः॥
अथतादृशग्रहस्यदुष्टंमध्यफलंस्यात्।दुष्टंफलंमध्यंस्यादित्यर्थः॥विपर्ययगतस्यजन्मराशिजन्मलग्नयोरपच
यस्थानेषुनीचभेशत्रुभेवास्थितस्यग्रहस्यानिष्टफलमयुक्तंस्यात्। शस्तंसमीचीनंफलंस्वल्पतरंस्यात्।अत्रजन्म
लग्नराश्योरुपचयस्थस्यततःशत्रुनीचभस्थितस्याथवातयोरपचयस्थस्यततःस्वोच्चादिषुस्थितस्यशुभमशुभंसमं
स्यात्॥एवंजन्मलग्नराश्योरेकस्मादुपचयस्थोन्यस्मादपचयस्थोयदिस्वभोच्चादिषुस्थितस्तस्यशुभमधिकमशुभम
ल्पंस्यात्।यदिवाशत्रुनीचारिभेस्थितदातस्याशुभमधिकंशुभंन्यूनंस्यादितिध्येयम्।खगस्यबलंतत्वतोज्ञात्वाफ
लंवदेत् ।यथाग्रहेसंपूर्णबलेशुभमशुभंचफलंसंपूर्णंमध्यबलेमध्यंहीनबलेहीनमित्येतत्प्रथममवधार्यानन्तरंप्रोक्त
प्रकारेणन्यूनत्वाधिकत्वंवाच्यमित्यर्थः॥अथोदर्कस्यबहुविधत्वात्कालस्यदुर्लक्ष्यत्वात्कविज्ञातकफलस्यव्यभि
चारिकंकर्तव्यमित्याह॥ ॥ जीवेक्वापिविभङ्गरिष्टजशिशूरिष्टंविनाश्नीयतेथाद्योब्दःशिशुदुस्तरापिवपौ

रा०॥ कार्यंतु नोपपत्त्रिका॥ कार्यंप्रश्ननिमित्तपूर्वशकुनैरप्यन्वमानंधिया होराज्ञेनसुबुद्धिनात्रबहुधोदकेस्यका
८१ लेककी॥ ४०॥ क्वापिविगतो भङ्गोयस्य तादृशंयद्रिष्टंतत्रजातःशिशुर्जीवेत्। अत्र ढ्रलोपेपूर्वस्यदीर्घोण इतिसू
त्रेणदीर्घत्वम्। क्वापिस्थलेरिष्टंविनापिशिशुः मीयते प्राणैः वियुज्यत इत्यर्थः। मीङ् हिंसायाम्। हिंसात्रप्राणवियोगः॥
दिवादिभ्यः श्यन्। मीयत इत्यस्य मरणार्थत्वं चकत्वमाख्यातचन्द्रिकायामप्युक्तम्। परेतिप्रेतिमरणेम्रियतेच
प्रमीयते। संस्थितिः समाप्तोति विरमत्यारमत्यपीति॥ १॥ केचित्तुमृङ् प्राणत्यागइतिधातोर्म्रियतइतिरूपमत्रपठ
न्ति। तदसत्। दीर्घस्यासंभवात्। म्रियतइतिपाठेतुछन्दोभङ्गः। तस्मान्मीयतइत्येवपाठःसाधीयान्। क्वापिविभङ्ग
रिष्टजशिशुरिष्टंविनामीयतेइति। तत्रफलस्यव्यभिचारदर्शनान्नसुबुद्धिनाहोराज्ञेनजन्मकालंसूक्ष्मतंसम्यग्लग्नस्थि
ताधियाब्दाद्यैः ग्रन्थान्मुहुर्मुहुर्विलोक्यशुभंविज्ञायपत्रिकाकार्येत्यन्वयः। वस्तुतस्तुरिष्टजशिशुजीवनंप्रबलंभङ्गं
विनानुपपद्यमानंभङ्गाभावेपिभङ्गं माक्षिपति। यद्यपिशास्त्रेपुरुषेणभङ्गोनोपलभ्यतेनैतावताशास्त्रदोषः। नह्ययंस्था
णोरपराधोयदेनमन्धोनपश्यतीतिन्यायात्। नचप्रत्यक्षेणशास्त्रेनुपलभ्यमानोपिरिष्टभङ्गः कथंकल्पनीयइतिवाच्यम्। रामः
अधुनातनप्रचरद्ग्रन्थेष्वनुपलब्धोप्यप्रचरद्यवनगर्गादिप्रणीतसारमजातकशास्त्रेभविष्यतीत्यवश्यंफलक ८१

स्यनेस्यसुक्तत्वात्॥अन्यथाशास्त्रप्रामाण्यविलयापत्तेः।एवंरिष्टानुपलम्भेपिमरणेरिष्टफलबलात्कल्प्यंतथासतिशा
स्त्रप्रामाण्यमव्याहतमेवेतिबोध्यम् ।                                        अथाघोब्दःशिशोर्दुस्तरःअपिचपरौद्वौद्वितीयतृतीय
वर्षौदुस्तरौ।अतःपत्रिकानोकार्या।आदिमवर्षेनुक्तावधिकानि।रिष्टानिसंध्यायांहिमदीधितिहोरापापैर्भान्तगतैर्मरणायेत्यादिनाबहूक्तान्येवंद्वितीयतृतीययोरपिबहूनिकथितानिसन्तितेषांसर्वेषांप्रचरद्वस्तुग्रन्थेषुभङ्गानामसत्त्वेवात
तदनेकरिष्टतद्भङ्गकदूहप्रबलदुर्बलभावेनरिष्टतद्भङ्गान्यतरनिर्णयस्यदुर्गमत्वाद्वर्षत्रयपर्यन्तंपत्रिकांनकार्या॥
वर्षत्रयानन्तरंतुअल्परिष्टोक्तेस्तद्भङ्गानामधुनातनग्रन्थेषुसत्त्वात्स्वल्पत्वेनतन्निर्णयस्यापिकर्तुंशक्यत्वाच्चवर्षत्रयान
न्तरंजन्मपत्रिकाकार्येतिभावः।अथयदिकश्चिदाग्रहशीलोवर्षत्रयमध्यएवपत्रिकाकार्येतिवदेत्तदाप्रश्ननिमित्तपूर्वशा
कुनैःप्रश्नेनिमित्तपूर्वैर्लग्नबलोपस्तुत्याद्यैःशकुनैश्चयदिवाप्रश्नैर्निमित्तपूर्वैःसुतदुर्वचनादिभिःशकुनैःपूर्णकुम्भादिभिश्चशु
भंज्ञात्वापत्रिकाकार्यानतुप्रश्ननिमित्तशकुनाद्यन्यतरेणैवशुभंविचिन्त्यपत्रिकाकार्येतिलाघवादाचार्यस्यवक्तुमुचितंत
त्[illegible]रपिशुभंविचार्यकार्येतुकमित्यतआह।बहुधोदर्कश्चकालोबलीति।बहुप्रकारंभाविफलंबलवदित्यर्थः।तथाचा
[illegible]विधानिमित्तंशकुनाःस्वकर्मशारीरमागन्तुकमद्भुतानि।दोषाभिचारग्रहचारकालकाम्यानिचैवंबहुविधःफलाध्वा॥एवं

गणितां बहुलाहृष्टप्रकारैः शुभं विज्ञाय पत्रिका विधातव्येति भावः। रसस्वमानमिति। प्राचीनगर्गादिग्रन्थानां सु
९२ स्पष्टा। इदानीन्तनस्य सेतु सकलरिष्ट तदुडुनाम सत्वादिदमित्थमेव भविष्यतिनो चेन्मया यज्ञोपवीतं त्याज्यमित्यादि
प्रा प्रतिज्ञा न कार्या किन्तु प्रचरद्वस्य ग्रन्थपर्यालोचनयैतादृशमस्तीति वाच्यमिति भावः। अत्र संरस मानं निजं होरा ज्ञेने
विपाठ्येतास्तु। अन्यथा रसं स्वमानमित्यस्यानिरर्थकस्तत्पानन्वयादनन्वितम पार्थकमित्यपार्थकता। क्वचित्तु स्तके
त्राणाय स्वमानं प्रियेति पाठो दृश्यते स तु नितरां साधुः स्वमानं त्राणाय स्यतेत्यर्थः। क्वचित्तु मानं प्रियायास्यतेति पाठः सोपि साधी
यान्॥ अथ ग्रन्थालङ्कारमाह॥ ॥ नन्दिग्रामे केशवो विप्रवर्यो योभूद्धोराशास्त्रसंघं विलोक्य। तेनोक्तेयं पद्ध
तिर्जातकीया चत्वारिंशद्वत्तवद्वालसुबोधा॥४१॥ स्पष्टार्थम्॥ इदानीं ग्रन्थपाठकफलावाप्तिव्याजेन ग्रन्थप्रशंसामनुष्टु
प्छन्दसाह॥ ॥श्रीसुबोधां पठन्तो मामयत्नां जातकपद्धतिम्॥ होराविद्भवन्ति लोके मानं यशः सुखम्॥४२॥
सुगमम्॥ ॥ गोदातीरवर्तिनगरे गोलग्राम विश्रुते गोलग्रामसमाहूये मुनिभरद्वाजान्वये दैववित्॥ योभूत्तु रविदिवाकरो बुध
कः श्रीकेशवतोस्य जातो दैवज्ञार्यगणेशस्तं नत्वा गुरोर्लब्धावबोधाशकः॥१॥ तस्मान्महेशार्चनलब्धसौख्यः श्रीकृष्णनामाऽज एस्
नि विप्रमुख्यः॥ कालत्रयज्ञानवताहि येन दैवज्ञशब्दो भुवि सार्थकोऽभूत्॥२॥ तस्मादभूतां तनयौ तदाद्यो मीमांसकाद्यो ९२

प्रौ.म.
टी.३

गणको नृसिंहः॥ शिरोमणेर्वार्तिकमुक्तियुक्तं सौरं च भाष्यं समकारि येन॥३॥ यद्दीप्त्या राजमानः सुखदलितपरोद्दण्डचण्डाभिमा
नः सिद्धान्ताभिज्ञसुहृद्द्विजवरनिवहोद्गीतकीर्तिः सुमूर्तिः॥ विद्यामासाद्य यस्माद्विदितयतिविबुधाचार्यकस्पर्द्धिभावं हृष्यन्तो यस्य
शिष्याः स जयति जगति श्रीशिवाख्यो द्वितीयः॥४॥ श्रीमन्नृसिंहसुतवर्यदिवाकराख्यः सत्सङ्गतेर्गणककेशवनिर्मितायाः॥
टीकामिमां विविधयुक्तिविशेषरम्यामाज्ञां शिवस्य सुगुरोः कृतवानवाप्य॥५॥ पूर्वोक्तिविश्वासवतां प्रतीतिर्नैतन्निरासेन वि
नाप्यतः स्यात्॥ अतो मया खण्डि पुरातनोक्तिर्गुरूपमेभ्योऽस्तु नमो महद्भ्यः॥६॥ दोषेषु बद्धहृदयाः खलता नितान्तमुष्ट्रावलीढ
पिचुमन्दककण्टकादौ॥ सन्तः प्रशान्तहृदयास्तु गुणान्भजन्तः कुर्वन्तु मद्गुणितिषु प्रकटं गुणोघम्॥७॥ मानंदिविप्रवरता
मपि भूर्यपेत ज्योतिर्ज्ञसंनिधिमिलत्सुरभानुभावः॥ तेजःप्रसन्नतरसाधुतमोहरागो भास्वान्विभातु स शिवः सकलैकमित्रः ९
॥८॥ अर्थद्वयवाची॥ भास्वान् श्रीसूर्यः शिवो मद्गुरुः शेषं स्पष्टम्। शाके गजाम्भोधिशरेन्दु १५४८ तुल्ये सिद्धान्तविन्मोदमनो
रमाख्यां॥ दिवाकरो व्यबुधकेशवोक्तेर्वृत्तिः सयुक्तिः समगात्समाप्तिम्॥९॥ इति श्रीसकलगणकचक्रचूडामणिश्रीकृष्ण
दैवज्ञसुतश्रीमन्नृसिंहगणकस्य सुतेन संप्रदायप्रवर्त्तकाचार्यश्रीमत्पितृव्यशिवज्योतिर्विल्लब्धविद्येन दिवाकरेण विरचिता
यां श्रीमत्केशवसांवत्सरोक्तजातककर्मपद्धतेष्टीकायां सवासनायां प्रौढमनोरमाभिधायां ग्रन्थसमाप्त्यलङ्कारः॥

विबोधयन्निराकुर्वन् मिथ्यातिमिरं सदा।

इति केशवीया जातकपद्धतिः प्रौढमनोरमासहिता समाप्ता॥

सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः॥